इयमात्मा परानन्दः परप्रेमास्पदं यतः।
मा न भूवं हि भूयासमिति प्रेमात्मनीक्ष्यते॥

पुत्रकलत्रादिषु यत्प्रेम, सोपाधिकमेव आत्मनि तु निरुपाधिकमेव तद्भवति। तथा च श्रुतिः— "न वा रे पत्युः कामाय पतिः प्रियो भवति" आत्मनस्तु कामाय पतिः प्रियो भवति इति। आत्मोपाधिकस्यैव प्रेमदर्शनादात्मनि तु प्रेम स्वत एवेति आत्मविषयप्रेम्णो निरुपाधिकत्वम्।

न च आत्मनः परमप्रेमास्पदत्वेन परमानन्दरूपत्वे तस्य च स्वयंप्रकाशत्वे विषयस्पृहानुपपन्नैवेति तथा चोक्तम्—

अभाने न परं प्रेम भाने न विषये स्पृहा।
अतो भानेप्यभाताऽसौ परमानन्दतात्मनः॥
तत्प्रेमात्मार्थमन्यत्र नैवमन्यार्थमात्मनि।
अतस्तं परमं प्रेम परमानन्दतात्मनः॥

अत्रोच्यते—अध्येतृवर्गमध्यस्थपुत्राध्ययनशब्दः पितुः सामान्यतः भासमानोऽपि विशेषतोऽयं मत्पुत्रध्वनिरिति न भासते तद्वदात्मनोऽपि परमानन्दरूपता सामान्यतो भाताऽपि विशेषतो न भासते। पुत्राध्ययनशब्दस्य विशेषतो भानाभावे सहपठनरूपः प्रतिबन्धः। आत्मनस्तु परमानन्दताया अभाने अनादिरविद्यैव हेतुः।

'इहानादिरविद्यैव व्यामोहैकनिबन्धनम्'।

तदनेन क्रमेण सर्वस्यापि जीवस्य सत्तायाः चितः आनन्दस्य च परस्परमभिन्नस्यैव स्पृहणीयतया तस्यैव च स्वरूपतया आत्मैव ब्रह्मेति वेदान्तमतम्। किन्तु अनादिदुरूहाविद्यावशात् जीवस्ततो विभक्त इव संसारे निमग्नो नितरां ततो विरमतीति भगवन्तो वेदान्तः तत्त्वमस्यादिवाक्येन जीवात्मपरमात्मनोरैक्यं वस्तुतो वर्तमानमपि बोधयन्ति, ततश्चैक्यज्ञानादज्ञाननिवृत्तौ स्वस्वरूपाप्तौ सर्वानर्थमूलस्य संसारस्य निवृत्तौ पुनः संसारो न प्रवर्तते।

'न स पुनरावर्तते' इति श्रुतेः।

तथा चोक्तं पञ्चदश्याम्—

इत्थं सच्चित् परानन्दः आत्मा युक्त्या तथाविधम्।
परं ब्रह्म तयोश्चैक्यं श्रुत्यन्तेषूपदिश्यते॥ इति॥

# ✿ ब्रह्मणो निर्विशेषत्व-सिद्धिः ✿

**पारसनाथ द्विवेदी**
वेदान्त-विभागाध्यक्षः
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालय, वाराणसी

सत्यं ज्ञानमनन्तं ब्रह्मेत्यादिश्रुतयः ब्रह्मस्वरूपं बोधयन्ति, 'यतो वा इमानि भूतानि' इत्यादयश्च तटस्थतया जगज्जन्मादिहेतुत्वेन ब्रह्म बोधयन्ति। तच्च ब्रह्म निर्विशेषं जिज्ञास्यम्।

"तद् ब्रह्म तद् विजिज्ञासस्व" इत्यादिश्रुतेः। तस्यैव ब्रह्मणो ज्ञानात् साक्षात्कारलक्षण मोक्ष इति "ब्रह्मविदाप्नोति परं" "तरति शोकमात्मवित्" इत्याद्यया श्रुत्यावबोधनात्। ब्रह्मभावश्च मोक्षः। तस्य नित्याप्तत्वात्, नित्यत्वाच्च समूलाविद्यानर्थनिबर्हणद्वारा परमपुरुषार्थत्वम्। प्राप्त एव प्राप्तोऽपि अप्राप्त एव प्राप्त इवाविद्यादिना स्वरूपतिरोधानात् भवति। तथा चाविद्यास्तमय एव मोक्षस्वरूपावाप्तिः-न च सविशेषः। ब्रह्मज्ञानात् ब्रह्मभावमावेदयति श्रुतिः। न च कस्यचिदपि विशेषस्य सत्त्वे वास्तवस्वरूपावाप्तिः सम्भवति। न च ब्रह्मभावातिरिक्तः कश्चन मोक्षः सम्भवति। न च जीव- ब्रह्मणोर्भेदो येन तदतिरिक्तो मोक्षः सम्भवेत्। "यत्र हि द्वैतमिव भवति स इतर इतरं पश्यति" "नेह नानास्ति किञ्चन" "यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत्।" "आत्मा वा इदमग्र आसीत् नान्यत् किञ्चन मिषत्" इत्याद्याः श्रुतयआत्मातिरिक्तस्य कस्यचिदपि निषेधमवगमयन्ति। किञ्च, ब्रह्मणि नानात्वं पश्यतो भयमावेदयति श्रुतिः "यदा हि एवैष एतस्मिन् दरमन्तरं कुरुते अथ तस्य भयं भवति" इत्यादि। एवञ्च ब्रह्मणोऽतिरिक्तस्य जडस्य चेतनस्य वा अभावात् ब्रह्मभावो मोक्षः, भेदश्च प्रतीतिसाक्षिको व्यावहारिको वा श्रुतिबलात् मन्तव्यः।

"अथातो ब्रह्मजिज्ञासे"ति सूत्रमीमांसायां भगवत्पादैः साधनचतुष्टयसम्पत्तिसम्पन्नैः पुरुषधौरेयैर्ब्रह्मजिज्ञास्यमिति प्रतिपादयद्भिः जिज्ञास्यं ब्रह्म निर्विशेषमेवेति असकृदुक्तम्।

"तत् पुनर्ब्रह्म प्रसिद्धं वा स्यात् अप्रसिद्धं वा? यदि प्रसिद्धं न जिज्ञासितव्यम्। अथाप्रसिद्धं नैव शक्यं जिज्ञासितुमिति। उच्यते, अस्ति तावद् ब्रह्म नित्यशुद्धबुद्धमुक्तस्वभावं सर्वज्ञं सर्वशक्तिसमन्वितम्। ब्रह्मशब्दस्य हि व्युत्पाद्यमानस्य नित्य-शुद्धत्वादयोऽर्थाःप्रतीयन्ते बृहतेर्धातोरर्थानुगमात् सर्वस्यात्मत्वाच्च ब्रह्मास्तित्वप्रसिद्धिः। सर्वो ह्यात्मास्तित्वं प्रत्येति न नाहमस्मीति यदि हि नात्मास्तित्वप्रसिद्धिःस्यात्, सर्वो लोको नाहमस्मीति प्रतीयात्। आत्मा ब्रह्मा च यदि तर्हि लोके ब्रह्मात्मत्वेन प्रसिद्धमस्ति ततो ज्ञातमेवेति अजिज्ञास्यत्वं पुनरापन्नम् न, तद्विशेषं प्रति विप्रतिपत्तेः"। अनेन भगवत्पादीयेन भाष्येण व्युत्पत्यापि ब्रह्मशब्देन निर्विशेषमेव तत् बोध्यते। सर्वलोकात्माऽऽपि निर्विशेषं ब्रह्मैवेति प्रतिपादितम्।

अयं भावः—बृहि वृद्धौ इति वृद्धिकर्मणो बृहधातोः मनङ्प्रत्यये ब्रह्मेति रूपम्। तत्र प्रकृत्यर्थस्य बृहतेः योग्यस्य निरतिशयमहत्वस्यानुगमात् भवति ब्रह्मणि प्रवृत्तिः ब्रह्मशब्दस्य। न च धातोर्महत्वमात्रप्रतीतावपि निरतिशयमहत्वप्रतीतिलाभो न स्यादिति वाच्यम्। उपपदादिसंकोचकप्रमाणाभावे निरतिशयमहत्वलाभात्। तथा च निरतिशयमहत्वे ब्रह्मशब्दार्थस्य विश्रान्तेः तदर्थे च सत्वे तस्य ब्रह्मणः नित्यादिरूपत्वं सिध्यति। देश-काल-वस्तु-परिच्छेदशून्यत्वे हि नित्यत्वं सम्भवति। न हि परिच्छिन्नोऽनित्यो निरंकुशः महान् कश्चित्पदार्थो भवति। नाप्यशुद्धस्तादृशो लोके दृश्यते अधर्माद्यशुद्धेर्लोके महतोऽप्यमहत्त्वव्यपदेशात्। धर्माद्यवच्छेदाच्च परिच्छिन्नत्वात् अनित्यत्वमेवापद्यते। नाप्यबुद्धः निरातिशयमहान्-भवति जडत्वात् परिच्छिन्नत्वात् परार्थत्वात् अमहत्वनिर्णयात्। अमुक्तस्य च पराधीनतया

परिच्छिन्नतया बद्धत्वात् न तादृङ्महत्वम्। एवञ्च अनानन्दस्य तस्यापुरुषार्थत्वात् जड़त्वाच्चामहत्त्वापत्तिः। अत एव शुद्धो बुद्धो मुक्तो न द्वितीयः परिच्छेदापत्तेः भयसम्भवाच्च 'द्वितीयाद् वै भयं भवती श्रुतेः। अत एव स सर्वज्ञः सर्वशक्तिश्च तथात्वरहितस्य निरतिशयमहत्वानुपपत्तेः कुण्ठज्ञानेच्छाशक्तित्वात्। तस्मात् ब्रह्मशब्दादेव शुद्धबुद्धमुक्तस्वभावस्य निर्विशेषस्य ब्रह्मणः प्रसिद्धिः। अत एवोक्तं तत्र भामत्यां वाचस्पतिमिश्रैः—''वृद्धिकर्मा हि बृहतिरतिशायने वर्तते। तच्चेदमतिशायनमनवच्छिन्नं पदान्तरावगमितं नित्यशुद्धबुद्धत्वाद्यस्याभ्यनुजानातीत्यर्थः। पदान्तरावगमितम् = अन्याभिः **निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम् स पर्यगाच्छुक्रमकायमव्रणम्,** इत्याद्याभिः श्रुतिभिः अनुगतमित्यर्थः। अत एव योगाद्रूढिर्बलीयसीति न्यायं बाधित्वा रूढ्यर्थं ब्राह्मणत्वादिजातिं परित्यज्य योगाश्रयणम्, योगाच्च तादृशार्थलाभः। तत्रापि न ब्रह्मशब्देन आत्माभिधीयतेऽपितु प्रतीयते। सा च प्रतीतिः लक्षणयैव। न हि जात्यादिप्रवृत्तिनिमित्तं विना शब्दस्य मुख्या वृत्तिः प्रवर्तते। एवञ्च भाष्ये ब्रह्मशब्दस्य निर्वचनात् लोकाच्च ब्रह्मनिर्विशेषप्रसिद्धिरुक्ता। प्रसिद्धस्यैव ब्रह्मणो विशेषप्रतिपत्तेर्वेदान्तशास्त्र-विचारारम्भ इति। श्रुतिरपि प्रसिद्धयोरेव तत्त्वंपदार्थयोरभेदमवगमयति। तत्वंपदार्थप्रसिद्धिस्तु यूपाहवनीयादिपदार्थवत् शास्त्रेणैवेति उक्तं सिद्धान्तबिन्दौ प्रथमश्लोके।

न च शुद्धस्य ब्रह्मणो जगत्कर्तृत्वास्वीकारात् कथं **यतो वा इमानि** इत्यादि वाक्येन निर्विशेषं बोध्यते इति वाच्यम्, औपाधिकेनापि जगज्जन्मादिहेतुत्वेन तद्बोधनात् 'पूर्वं यत् रजतमभात् सा शुक्ति' रेवेतिवत् जगज्जन्मादिहेतुत्वेन यत् विभाति तत् ब्रह्मैव। यथा रजतमिति शुक्तिरूपलक्षणं निर्विशेषब्रह्मणा एवेदं लक्षणम् तदेवाज्ञातं सत् जिज्ञास्यम्। अत एव भाष्यकारा निर्णयाञ्चक्रुः। किं पुनस्तद् वेदान्तवाक्यं यत् सूत्रेणेह लिलक्षयिषितम्? भृगुर्वै वारुणिः वरुणं पितरमुपससार अधीहि भगवो ब्रह्मेति इत्युपक्रम्याह—यतो वा इमानिभूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद् विजिज्ञासस्व, तत् ब्रह्मेति (तै० ३/१) तस्य च निर्णयवाक्यम्—आनन्दाद् ध्येव खल्विमानि भूतानि जायन्ते आनन्देन जातानि जीवन्ति आनन्दं प्रयन्त्यभिसंविशन्तीति (तै० ३/६) एतेन श्रुतिव्याख्याभूतब्रह्मसूत्रभाष्यसन्दर्भेण आनन्द एव जगत्कारणं तदेव ब्रह्मेति आगतम्। आनन्द इति पदं सत्यादेरपि उपलक्षणम्। सत्यज्ञानादेरपि ब्रह्मस्वरूपत्वात्। एवञ्च यत् जगज्जन्मादिकारणं तदानन्दस्वरूपं ब्रह्मेति स्वरूपलक्षणपरतयाऽपि 'जन्माद्यस्य यत' इति सूत्रार्थो बोध्यः। **यत्र नान्यत् पश्यति नान्यच्छृणोति** इत्यारम्भ **यो वै भूमा तत् सुखमित्यादिना** सुखस्यैव बृहत्वमाहश्रुतिः नाल्पे सुखमस्तीत्यादिना च परिच्छिन्नस्यासुखत्वं बोधितम्।

**विज्ञानमानन्दो ब्रह्मेत्यादिना** च विज्ञानरूपत्वमपि तस्य बोधितम्। न च विज्ञानमानन्दरूपस्य ब्रह्मणो निरुपाधिकस्य गुण इति धर्म इति वा सम्भवति। **साक्षी चेता केवलो निर्गुणश्च एकधैवानुद्रष्टव्यं, नेह नानास्ति किञ्चनेत्यादि** निर्गुणनिष्प्रकारकब्रह्मावबोधकश्रुतिविरोधात्। न च निर्गुण इत्यस्य हेयगुणरहित इत्यर्थः कल्पनीयः तादृक् संकोचे प्रमाणाभावात्।

एकधैव, नेह नानास्तीत्यादि श्रुतिबलात् सकलगुणधर्मरहितस्यैव ब्रह्मणोऽवबोधनात्। तथा च **'विज्ञानमानन्दो' ब्रह्मे** त्यादौ न गुणगुणीभावात् नीलोत्पलादिवत् सामानाधिकरण्यम्। न च निर्गुणं द्रव्यं नास्तीतिवाच्यम्। ब्रह्मणो अद्रव्यत्वात्। न च ब्रह्मणो द्रव्यत्वे प्रमाणमस्ति। न च समवायिकारणत्वात् द्रव्यत्वमिति वाच्यम्, आरम्भवादास्वीकारात्। उपादानकारणत्वात् द्रव्यं ब्रह्मेति चेन्न गुणादेरपि ग्रहणधर्मत्वादिधर्मोपादानत्वात् द्रव्यत्वापत्तेः। ब्रह्मणश्च विवर्तोपादानत्वात् न द्रव्यत्वापत्तिः। न च निर्गुणं वस्तु नास्तीति वाच्यम्, गुणस्यासत्वापत्तेः। सर्वज्ञत्वाद्वितीयात्वादिधर्मा ब्रह्मणि कल्पिता इति न तैः ब्रह्म सगुणं सद्वितीयं वेति वक्तुं शक्यते। ''सदेव सौम्येदमग्र आसीत्'' इत्यादिश्रुतिभिर्निर्विशेषस्याद्वितीयस्य बोधनात्। तथा हि एकमेवाद्वितीयमिति पदैःसजातीयविजातीयस्वगतभेदनिषेधद्वारा प्रत्यगभिन्नसन्मात्रं ब्रह्म बोध्यते। ''अथ

परा यया तदक्षरमधिगम्यते, यदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतं योनिं परिपश्यन्ति धीराः।'' ''स पर्यगात् शुद्ध मकायमव्रणम्।'' अन्यत्र **धर्मादन्यत्राधर्मात्, स एष नेति नेत्यात्मा, साक्षी चेता केवलो निर्गुणश्चेत्यादिश्रुतिसहस्त्रैः** सिद्धं ब्रह्मणोर्निर्विशेषत्वम्। न चेदृशीनां निर्विशेषब्रह्मणि अवधृततात्पर्याणां षडविधलिङ्गोपेतानामद्वैतवादिनीनां निर्विशेषत्वबोधिनीनां श्रुतीनामुपचरितार्थत्वं युक्तम्, तदर्थे बाधकाभावात्। न च **सर्वकामः सर्वसंकल्पः सर्वरसः, द्वासुपर्णा, सर्वज्ञः सर्वशक्तिरित्यादिश्रुतयः** ब्रह्मणो विशेषवत्ताबोधिका सृष्टिप्रतिपादकश्रुतयश्च तस्य सविशेषत्वं बोधयन्तीति कथं निर्विशेषत्वावधारणं न्याय्यं समानबलत्वात् उभयप्रकारकश्रुतीनामिति सविशेषं निर्विशेषमुभयादृशं वा ब्रह्म स्यात् इति वाच्यम्, एकस्मिन्नेव धर्मिणि विरोधात् सविशेष-निर्विशेषत्वयोरवस्थानाभावात्। सविशेषत्वप्रतिपादक श्रुतीनाञ्च आरोपितविशेषमादाय अनुवादकत्वेन चरितार्थत्वात् निर्विशेषे एव तासां निर्गुणश्रुतीनां अपूर्वार्थप्रतिपादनात् प्रामाण्यं युक्तम्। ''द्वा सुपर्णा'' इति श्रुतिस्तु ईशजीवभेदमादाय संगता। सृष्टिश्रुतयश्च जगत्कर्तृत्वेन विशुद्धं ब्रह्मोपलक्षयन्ति। किञ्चसमस्त प्रपञ्चस्याध्यारोपेण **नेति-नेति, नेह नानास्ति किञ्चन,** एकमेवाद्वितीयमित्यादिनां श्रुतीनां निषेध्यार्थसमर्पणमुखेन चारितार्थ्यमिदं न ब्रह्मस्वरूपबोधनने साक्षात्तात्पर्यम्।

यत्र श्रुत्या ब्रह्मस्वरूपं बोध्यते तत्र सर्वत्र शुद्धस्य निर्विशेषस्यैव स्वरूपं लक्ष्यते ''सत्यं ज्ञानमनन्तम्'' अद्रेश्यमग्राह्यम्, ''शुद्धं शान्तं निरवद्यम्'' शुक्रमकायमव्रणमित्यादिभ्यः।

न च विशेषप्रतिपादकश्रुतिबलात् उपचरितार्थाश्च निर्गुणश्रुतया एव कथं नेति वाच्यम्, निर्विशेषप्रतिपादकश्रुतीनामनधिगतार्थ-बोधकत्वेनाव्याहतप्रामाण्यवत्त्वात्। तादृशनिर्गुणवस्तुनः प्रपञ्चेऽप्रसिद्धत्वेन अनुवादाभावात्, हेयविशेषराहित्यबोधनमात्रे तात्पर्यसंकोचे प्रमाणभावात्। नेति-नेति, इति निषेध्यस्याभावापत्तेः। प्रसक्तं हि प्रतिषिध्यते, प्रसक्तश्च सर्वप्रपञ्चः स निषेध्यः। तदन्तर्वर्तिहेयगुण अपि निषेध्या एव। अत एव भागवते गजेन्द्रस्तुतौ ''निषेधशेषो जयतादशेषः'' इति उक्तम्। यैरपि हेयगुणा एव निर्गुणवाक्येन निषेध्या इति वदद्भिर्निर्गुणश्रुतिसंगतिः क्रियते तैर्न तादृशसंकोचे दृढतरं किमपि प्रमाणं प्रदर्शितम्, अतः सतीसु विविधासु सविशेषनिर्विशेषप्रतिपादिकासु श्रुतिषु स एव पन्था व्याख्यानस्य उचितः यत्र कस्या अपि श्रुतेस्तात्पर्यं बाधितं न स्यात्। समुचितश्च पन्था शाङ्करः शङ्करः। नात्रैकश्रुतेरपि वैयर्थ्यम् सविशेषश्रुतेरुपासनायां तात्पर्यावधारणात् निर्विशेषश्रुतेश्च ज्ञेयस्वरूपोपलक्षणकत्वात्। उपासना च भेदव्याप्या गुणप्रयोज्या चेति तदर्थं निर्विशेषे गुणा अवश्यं कल्पनीयाः स चोपासना चित्तैकाग्र्यार्थम्। एवञ्च जीवब्रह्मणोः काल्पनिकभेदमादायोपास्योपासकत्वसिद्धेः ब्रह्मोपासना सम्भवतीति सर्वाः सविशेषत्ववादिन्यः श्रुतयश्चरितार्थाः। स्वरूपबोधिकाश्च श्रुतयः स्वरूपमवगमयन्ति। अत एव आनन्दमयाधिकरणे भगवत्पादैः ईक्ष्यत्यधिकरणादनन्तराधिकरणामुत्थानबीजं किमित्यालोचयद्भिः सम्यगुपपादितमुभयश्रुतीनां तात्पर्यम्। तत्रत्योऽयं भावः— अथातो ब्रह्मजिज्ञासा, इत्यनेन साधनचतुष्टयसम्पत्तिसम्पन्नेन मुमुक्षुणा ब्रह्म जिज्ञासितव्यम् इत्युक्तम्। जन्माद्यस्य यतः इत्यादिना तद्वाक्यशेषेण च ब्रह्मणस्तटस्थस्वरूपलक्षणमुक्तम्। असम्भावनाविपरीतभावनानिवृत्तिपूर्वकं सम्भावना दृढीकृता। किञ्च सकलप्रपञ्चस्याभिनिमित्तोपादनत्वं प्रतिपादितम्। तथा च जन्माद्यस्य इत्यारम्भ श्रुतत्वाच्चेत्यन्तैः सूत्रैः सर्वज्ञसर्वशक्तिब्रह्म चेतन-जगत्कारणमिति वेदान्तवाक्यैरुदाहृतैः प्रतिपादितम्। गतिसामान्याच्च इत्यनेन च सर्वेषां श्रुतिवाक्यानां चेतनकारणत्वे तात्पर्यमवधारितम्। तत्तु समन्वयादिति सूत्रेणापि निर्विशेषब्रह्मणि वेदान्तानमखण्डतात्पर्येण अन्वयो बोधितः। तदनन्तरं ग्रन्थोत्थानबीजं किमिति जिज्ञासायामुक्तम्—सर्वेषु वेदान्तेषु द्विरूपं ब्रह्म बोध्यते नामरूपविकारभेदोपाधिविशिष्टं सविशेषं सर्वोपाधिविवर्जितं निर्विशेषञ्च। तथाहि यत्र द्वैतमिव भवति तदितर इतरं पश्यति (बृ० ४-८-१५) यत्र त्वस्य सर्वात्मैवाभूत् तत् केन कं पश्येत् (बृ० ४-५-१५) यत्र नान्यं पश्यति नान्यतत्

श्रृणोति नान्यत् विजानाति स भूमा। अथ यत्रान्यत् पश्यतिअन्यत्श्रृणोत्यन्यत् विजानाति, यो वै भूमातदमृतम्। अथ यदल्पं तन्मर्त्यम् (छान्दो0 ७-२४-१) सर्वाणि रूपाणि विचित्य धीरः नामानि कृत्वाभिवदन्यदास्ते (तैति० ३-१२-७) निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्। अमृतस्य परं सेतुं दग्धेन्धनमिवानलम् (श्वेताश्व० ६-१९)। नेति नेति (बृ० २-३-६) अस्थूलमनणुमह्रस्वमदीर्घम् (बृ० ३-८-८) न्यून मन्यत् स्थानं सम्पूर्णमन्यत् इति श्रुतयो ब्रह्मणो द्विरूपतां बोधयन्ति। तत्रैकत्र उभयो रूपयोः परस्परविरुद्धयोः सहावस्थानाभावात् एकस्य च द्विरूपत्वाभावात् व्यवस्था अनिवार्या, अन्यथा कस्या अपि श्रुतेर्वैयर्थ्यापातात्। तत्रेयं व्यवस्था श्रुत्यैव प्रतिपाद्यते द्वेविधे वेदितव्ये इत्याद्यया। परा अपरा च द्वे विद्ये। तत्र अपरविद्यया-ऋग्यजुर्वेदादि प्रतिपाद्य कर्मोपासना विषयत्वं प्रतपाद्य अथ परा यया तदक्षध्यरमधिगम्यते इत्युक्त्या पराविद्याविषयो ब्रह्मेति। एवञ्च कानिचित् वेदान्तवाक्यानि, ब्रह्मणः उपासनाप्रतिपादकानि अभ्युदयफलानि। यथा नामब्रह्मेत्युपास्तिः। कानिचित् वाक्यानि क्रममुक्तिफलानि। यथा दहराकाशोपासना। कानिचित् च कर्मसमृद्ध्यर्थानि। यथा उद्गीथादिध्यानम्। एवञ्च सविशेषप्रतिपादकानि वाक्यानि अविद्यावस्थायां ब्रह्मण उपास्योपासकादिभेदमादाय तदुपासनपराणि। तासामुपासनानामपि विभिन्नफलानि इत्युक्तमेव। एक एव परमात्मा निर्विशेषस्तैस्तै-रारोपितैर्गुणविशेषैरुपास्योभिन्न-भिन्नफलाय भवति। यथा एकमेवौषधमनुपानभेदेन-विभिन्नव्याधिनिरासायोपसेव्यते। एवञ्च यथागुणं फलान्यपि भिद्यन्ते। अत एव श्रुतिः ''यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेत प्रेत्य भवति (छा० ३-१४-१) स्मृतिरपि ''यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम्। तं तमेवैति कौन्तेय सदा तद्भावभावितः'' (गीता ८-६)॥

एक एव परमात्मा सर्वभूतेषु स्थावरजंगमेषु गूढ़ः चित्रोपाधिविशेषतारतम्यात् उपलब्धतारतम्यः श्रूयते।

तथा चैकमेव ब्रह्म श्रितोपाधिसम्बन्धमुपास्यत्वेन निरस्तोपाधिसम्बन्धं ज्ञेयत्वेन वेदान्तेषूपदिश्यते इति निर्णयाय परो ग्रन्थ आरभ्यते। आनन्दमयोऽभ्यासात् इति। अतः एतादृशशांकरदर्शनेन विशेषबोधिनीनां श्रुतीनां वैयर्श्यम्। अपि तु सुतरां सामञ्जस्यम्। केवलमुपास्यमेव ब्रह्म न ज्ञेयत्वेन श्रुत्या बोध्यते इति वदन्तस्तु निर्गुणबोधकश्रुतीरपलपन्त्येव। किञ्च अथातो ब्रह्मजिज्ञासा इति प्रतिज्ञावाक्ये ज्ञेयत्वेन ब्रह्म प्रतिज्ञायते ज्ञातुमिच्छा जिज्ञासा न तु उपास्तुमिच्छा जिज्ञासा भवति, न च उपास्तौ लक्षणा अभिधयान्वये जाते निर्बाधे लक्षणानुचितत्वात्।।

एवञ्च सर्वेषां वेदान्तानामविशेषेण निर्विशेषे ब्रह्मणि समन्वये न किञ्चिदपि बाधकम्।

# जिज्ञासासमाधिलीलैकादशकम्।

**दामोदर शर्मा**
न्याय प्राध्यापकः
महेन्द्र संस्कृत विश्वविद्यालयः दाङ्

'लब्धस्वर्गवासा अपि मातापितरः कदाचित् स्वप्ने दृश्यन्ते, तान् विलोक्य मनसि प्रसन्नताऽपि समायाति, तदानीं प्रायो न स्मर्यते 'मदीयमातापितरस्तु लब्धस्वर्गवासाः कथमत्र दृष्टा' इति, कुतः ?। जाग्रदवस्थायां विद्यमानेन जनेन स्वेच्छया स्वप्नावस्थां प्रति गन्तुं न शक्यते कुतः ?। कुतश्च स्वप्नावस्थायां विद्यमानेन जाग्रदवस्था स्वेच्छया प्राप्तुं न शक्यते ?। कुतो वा जाग्रदवस्थायां स्वप्नावस्थायां वा विद्यमानेन जनेन स्वेच्छया स्वाभिलषितसमये सुषुप्त्यवस्था प्राप्तुं न शक्यते ?। कुतो वेदमवस्थात्रयं परित्यक्तुं केनापि जमेन स्वेच्छया स्वाभिलषितसमये न शक्यते ?। कथं वा तुर्यावस्थां प्रति केनापि जनेन स्वेच्छया स्वाभिलषितसमये गन्तुं न शक्यते ? (किं तादृशं कारणमस्ति येनेत्थं भवति)। स्वप्नावस्थीयजगत् केन साधनेन सम्पद्यते ?। जाग्रदवस्थायां जातायां स्वप्नावस्थीयं तज्जगत् कुत्र लीयते ?। स्वप्नावस्थीयं तज्जगत् कैरिन्द्रियैः प्रत्यक्षीक्रियते। न हि तदानीमिमानीन्द्रियाण्यशयितानि विद्यन्ते, अन्यथा स्वप्नावस्थपुरुषेण सुप्ततत्सन्निधौ विद्यमानानामसुप्तानां जनानां वार्तालापदयः श्रूयेरन्, न च श्रूयन्ते, रूपादयो दृश्येरन्, न तु दृश्यन्ते। कोऽपि जनः स्वप्नावस्थायाम् 'इयं स्वप्नावस्था' इति कुतो न प्रायो जानाति ? येन तदानीं 'मदीया पत्नी मृता' इति 'मदीयसन्ततिर्हृता' इति 'मदीयं धनं चोरितम्' इति रोदिति। स्वप्नावस्थायां शय्यास्थानतो दूरगतो जनः कैः प्राणादिभिर्जीवति ? न हि जीवः प्रागादिभिर्विना जीवति, तदीयाः प्राणास्तु शय्यास्थलीयतदीयशरीरे एव चलन्तोऽनुभूयन्ते तत्रत्यैरन्यैरसुप्तैर्जनैः, येन वक्तुं न शक्यते 'स्वकीयान् प्राणान् गृहीत्वैव दूरं यातोऽस्ति' इति। अतिविलक्षणमेतद्यत् सुप्तप्रबोधसन्धिं न कोऽपि प्रायोऽनुभवति, कुतः ? इत्येवंविधा नानाप्रकारा जिज्ञासाः प्रादुर्भवन्ति, या असमाधेया इव प्रतीयन्ते, ताः समाधीयन्तेः—

तादृशतादृशस्थितौ यादृशयादृशभोगस्तादृशतादृशभोगसम्पादकादृष्टसत्त्वादन्यादृशभोगसम्पाद-कादृष्टासत्त्वात्तादृशतादृशस्थितिर्भवत्यपरा स्थिति र्न भवति, अपरस्यां स्थितावन्यादृशस्यैव भोगस्य आपत्तेः, अदृष्टेन यथा यथा यदा यदा यादृशो यादृशो भोगो देयो भवति तथा तथा तदा तदा तादृशतादृशभोगसम्पत्तिर्यथा यथा भवति तथा तथा साधनानि चदृष्टेनैव सृज्यन्ते विलाप्यन्ते च, तत्र तत्र स्थितावदृष्टमेव कारणमस्ति, स्वप्नावस्थस्य मम रूपादिदर्शनाद्यर्थं मदीयादृष्टेनापराणि, चक्षुरादीन्द्रियाणि सृज्यन्ते यैरहं तदानीं रूपादिदर्शनादिकं करोमि, अन्यथा स्वप्नावस्थादानोद्देश्यस्यैव तदीयस्यानुपपत्तेः, स्वोद्देश्यस्य तेन कयाऽपि रीत्या पूरणीयत्वात्, यादृशेनादृष्टेन तादृशस्य कार्यस्य सर्वथाऽपिसम्पादनीयत्वात्। स्वप्नावस्थायाम् 'इयं स्वप्नावस्थाऽस्ति' इति ज्ञाने सति 'मदीयमातापितरो लब्धस्वर्गवासाः कथं दृष्टा ?' इति भावनायां सत्यां स भोगो न सम्पद्यते यो भोगोऽदृष्टेन सम्पादनीयो विद्यते इति तद्दृशज्ञानस्य तादृशभावनायाश्च प्रतिबन्धोऽदृष्टेनैव क्रियते, 'इयं स्वप्नावस्था' इति ज्ञाने सति 'मदीया पत्नी मृता' इति 'मदीयसन्तति र्हृता' इति 'मदीयं धनं चोरितम्' इति न कष्टमनुभवतीति 'तत्कष्टदानात्मकमुद्देश्यं न पूर्यते' इति तादृशज्ञानं जनेषु प्रतिबध्यतेऽदृष्टेन स्वप्नावस्थायाम्। न च 'सर्वदैव तादृशी स्थितिः कुतो भवति ? कदाचित्त्वन्यविधेनाप्यदृष्टेन भाव्यम् ?' इति वाच्यम्, अन्यविधस्यादृष्टस्य पूर्वजन्मन्यप्यभावात् यादृशादृष्टेन तादृशादृष्ट- जनककर्मण एव सम्पत्तेरन्यविधादृष्टस्यानुत्पत्तेः। न च 'अन्यविधस्यादृष्टस्य पूर्वजन्मन्यसत्वेऽपि पूर्वतरपूर्वतमजन्मसु सत्त्वसमभवेन 'कदाचित्त्वन्यविधेनाप्यदृष्टेन भाव्यम्, कथं सर्वदैव तादृशी स्थितिः ?' इत्याशङ्का तदवस्थैव' इति वाच्यम्, पूर्वजन्मन्यन्यविधादृष्टस्यासत्त्वेन पूर्वतरपूर्वतम- जन्मस्वपि



तादृशादृष्टस्यासत्त्वस्य ज्ञापितत्वात्, अन्यथा पूर्वजन्मन्यन्यविधादृष्टासत्त्वस्यासंभवात्। यथा तेनादृष्टेन स्वदेयभोगदानाय जाग्रदवस्थीयजगत् सृष्टमस्ति तथा स्वप्नावस्थीयजगदपि सृज्यते। न च 'तथा सति स्वप्नावस्थीयजगत् वस्तुतोऽसदपि दृश्यते' इत्युक्तिः कथं संगच्छते इति वाच्यम्, तस्य जगतो वस्तुतोऽसत्त्वेऽपि सर्वथाऽसत्त्वाभावात्, अत एव तत्र 'वस्तुतः' इति पदस्य योजितत्वात्, अन्यथा तद्योजनवैयर्थ्यापत्तेः 'स्वप्नावस्थीयजगदसदपि दृश्यते' इत्येतावत एव पर्याप्तत्वात्, ब्रह्मातिरिक्तेषु कुत्रापि पारमार्थिकसत्त्वानङ्गीकर्तृभिर्वैदान्तिकैरपि स्वाप्निकजगति प्रातिभासिकसत्तायाः स्वीकृतत्वात्, सत्त्वसामान्याभावस्यानङ्गीकृतत्वात्, मिथ्याशब्दस्य पारमार्थिकसत्त्वाभाववदर्थकत्वात्, सर्वथाऽसतश्च मिथ्यात्वेनाप्यवक्तव्यत्वात्, शशशृङ्गादेः कुत्रापि मिथ्यात्वेनानुक्तत्वात्, 'स्वाप्निकजगत् मिथ्यात्वेनोक्तम्' इत्येतावतैव तत्र कस्यचन सत्त्वस्य सिद्धत्वाच्च' 'स्वप्नावस्थीयजगद् वस्तुतोऽसदपि दृश्यते' इत्यनेन विरोधाभावात्।

ननु 'अदृष्टेन तदधिष्ठात्रा परमेश्वरेण वा स्वाप्निकजगत् केन साधनेन सृज्यते?' इति चेत् 'नित्यपरमाण्वादिकेन' इत्युच्यते। 'तावच्छीघ्रं तथा सर्जनमसंभवम्' इति चेन्न, परमेश्वरप्रभावस्यासीमत्वात्। एतेन 'तावच्छीघ्रं स्वाप्निकजगतो विलापनमसंभवम्' इत्यपि प्रत्युक्तम्, असीमप्रभावशालिभगवच्छकाशात् यावच्छीघ्रमपि सृष्टेर्विलयस्य च संभवात्। अदृष्टस्य भगवतश्च प्रभावाज्ञानेन तादृश्या विविधाः शङ्का जायन्ते। अदृष्ट-प्रभावविषये भगवत्प्रभावविषये च येषामज्ञानं नास्ति तेषां तादृश्या आशङ्का नैवोत्पद्यन्ते। अदृष्टस्य प्रभावोऽवर्णनीयोऽस्ति, अदृष्टविपरीतं कथमपि किमपि भवितुं न शक्नोति, अदृष्टेन स्वदेयो भोगो दीयत एव। अत एवोच्यते :-

**'सुखस्य दुःखस्य न कोऽपि दाता परो ददातीति कुबुद्धिरेषा।**
**अहं करोमीति वृथाऽभिमानः स्वकर्मसूत्रग्रथितो हि लोकः॥'** इति

स्वकर्मसूत्रं नाम स्वादृष्टरूपरज्जुः। एतद्विषये एका कथाऽपि श्राव्यते श्रीमद्भागवतमाहात्म्यस्था :-

तुङ्गभद्रानदीतीरे एकं नगरमासीत्, तत्र विद्याविनयसम्पन्न आत्मदेवनामा कश्चन ब्राह्मण आसीत्, तदीयादृष्टवशात्तदीयललाटे लिखितमासीत्'सप्तजन्मावधि तव पुत्रो नैव च नैव च' इति। तदीया धुन्धुलीनाम्नी भार्याऽऽसीत्, बहुकालपर्यन्तं सन्तति र्न जाता, सन्ततिप्राप्त्यर्थधर्मार्जनार्थं बहूनि धार्मिककर्माणि कृतानि, तथापि सन्तति र्न जाता, तेन दुःखितः स ब्राह्मण एकदा वनं गतः, तत्र कश्चन यतिर्मिलितः, तेन ब्राह्मणेन सन्ततये प्रार्थितः स यतिस्तदीयललाटं विलोक्योक्तवान्'सप्तजन्मावधि तव पुत्रो नैव नैव च' इति, 'पुत्रं न ददासि चेदहं त्वत्समक्षे एव गलबन्धादिना म्रिये' इति तेनोक्तो यतिरेकं फलं दत्त्वोक्तवान्'फलमिदं तव पत्न्या भुज्यतां, वर्षमेकं नियमेन स्थीयताम्, निर्मलः पुत्र उत्पत्स्यते' इति, स तत्फलमादाय गृहं गत्वा स्वपत्नीमुक्तवान्'फलमिदं भुङ्क्ष्व, निर्मलः पुत्र उत्पत्स्यते' इति, तदुत्तरं स कुत्रापि गतः, तत्पत्न्या गर्भधृत्या दौर्बल्यादिभयात् तत्फलं न भुक्तम्, समागतेन पत्या 'फलं भुक्तम्?' इति पृष्टया तया भुक्तमित्यसत्यमुक्तम्, तत्फलं तया मासत्रयानन्तरं धेन्वै दत्तं धेन्वा भुक्तम्, तस्याः पुत्रो जातस्तस्य नाम गोकर्णसदृशकर्णकत्वात् 'गोकर्णः' इति कृतम्, स आत्मदेवेन स्वकीयः पुत्रोऽमन्यत। धुन्धुली चासत्योक्तिज्ञानतः फलाभुक्तिज्ञानतश्च पति मां भर्त्सयिष्यतीति भिया वस्त्रादिवेष्टनेन स्वकीयोदरं क्रमशः स्थूल-स्थूलतर- स्थूलतमं दर्शयामास, दशमे मासे सद्योजातं स्वभगिनीपुत्रं क्रीत्वा गुप्तरूपेणैव आनीय च स्वपतिं प्रति 'अहं प्रसूता, पुत्रो जातः, परं मम कुचयोः स्तन्यं नास्ति, 'मम भगिन्या इदानीमेव पुत्रो जातो मृतश्च' इति श्रूयते, तस्याः कुचयोः स्तन्यं स्यात्, तामाकार्य गृहे रक्ष सा तेऽर्भं पोषयिष्यति' इत्युक्तवती, तदनुसारमेव आत्मदेवेनापि कृतम्, नामकरणदिवसे आत्मदेवेन धुन्धुली पृष्टा 'प्रिये! बालकस्य किं नाम कर्तव्यम्?' इति, तया तस्मिन् बालेऽस्वपुत्रेऽपि स्वपुत्रत्वख्यापनाय भणितं 'धुन्धुकारी' इति, अयं धुन्धुकारी गोकर्णतो मासत्रयं ज्येष्ठोऽस्ति, अनयोर्मध्ये गोकर्णः पण्डितो ज्ञानी धुन्धुकारी महाखलः सञ्जातः। धुन्धुकारिमहाखलत्वेनातिदुःखित आत्मदेवो महाज्ञानिना गोकर्णेन





वैराग्यं बोधितो वनं गतो यावज्जीवनं विहितश्रीमद्भागवतदशमस्कन्धपाठो मुक्तिं गतः। गोकर्णोऽपि तीर्थयात्रायै गतः, न दुःखं न सुखं तस्य न बैरी नापि बान्धवः। इतो गृहे वेश्याऽऽसक्तेन वेश्याप्रीणनाय आवश्यकीभूतधनेन धुन्धुकारिणा 'क्व वित्तं तिष्ठति ब्रूहि हनिष्ये लत्तया न चेत्' इत्येवं भणिता दुःखिततमा धुन्धुली किं कुर्याद् बराकी ?, तया खलु कूपे पातः कृतो रात्रौ तेन सा निधनं गता। पञ्चवेश्यायुतोऽयं धुन्धुकारी स्वगृहेऽतिष्ठत्, गृहीयधने समाप्ते तासां वेश्यानां प्रीणनायान्यत एव चोरयित्वाऽऽभूषणादिकं बहु धनमानीतवान्, चौर्येण आनीतं बहुधनं विलोक्य ता बहुपतयो वेश्या राजनिग्रहभिया तं गुप्तरूपेणोल्मुकादिना मारयित्वा धनं गृहीत्वा पलायिताः। दुर्मृतिमापन्नोऽयं धुन्धुकारी उग्रः प्रेतो बभूव, इमं मृतं ज्ञात्वा गोकर्णेन गयादौ तत्र तत्र एतदर्थं तीर्थश्राद्धदिकं कृतम्, किंचित्कालानन्तरं गृहं समायातस्य केनाप्यन्येनाप्रेतेनालक्षितस्य गोकर्णस्य समक्षे रात्रौ तेन प्रेतेन विकृतानि नानारूपाणि दर्शितानि, परस्परं वार्तालापेन तं प्रेतं धुन्धुकारिणं विदित्वा गोकर्णस्तस्मै सप्ताहयज्ञसम्पादनेन मुक्तिं ददौ इति।

एतादृशोऽस्त्यदृष्टस्य प्रभावो यः कथमपि परिमार्ष्टुं न शक्यते, आत्मदेवेन तावान् प्रयासो विहितः परं ललाटे लिखितं प्रोज्झितुं न पारितम्, **लिखितमपि ललाटे प्रोज्झितुं कः समर्थः।**

'ननु भवता भणितम् 'आत्मदेवस्य ललाटे लिखितमासीत् 'सप्तजन्मावधि तव पुत्रो नैव च नैव च' इति, भवतैव भणितं 'स आत्मदेवो वनं गतः सन् यावज्जीवनं विहितश्रीमद्भागवतदशमस्कधपाठो मुक्तिमवाप' इति च यस्य सप्तजन्मान्येव न सन्ति तेन कथं सप्तजन्मपर्यन्तमपुत्रेण भवितुं शक्यम्' इति चेच्छ्रूयताम्-

'सप्तजन्मावधि तव पुत्रो नैव च नैव च' इत्यस्य 'तव सप्तजन्मपर्यन्तं पुत्राभावो लिखितोऽस्ति येषु सप्तजन्मसु इदं वर्तमानं जन्म सप्तममस्ति' इत्यर्थकत्वात्, 'यावति काले मानवीयानि सप्तजन्मानि व्यतियन्ति तावत्कालपर्यन्तं तव पुत्रो नास्ति' इत्यर्थकत्वाद्वाऽसामञ्जस्याभावात्।

न च 'तस्य वचसस्तादृशार्थकत्वे मानाभावः' इति वाच्यम्। तस्यैव पुरुषस्य तत्रैव जन्मनि मुक्तिप्रतिपादकानाम्-

**'एवं सुतोक्तिवशतोऽपि गृहं विहाय, यातो वनं स्थिरमतिर्गतषष्टिवर्षः।**
**युक्तो हरेरनुदिनं परिचर्ययाऽसौ, श्रीकृष्णमाप नियतं दशमस्य पठात्॥'**

*(श्रीमद्भागवतमाहात्म्ये चतुर्थोध्यायस्यान्तिमः श्लोकः).*

इत्यादिवचसामेव प्रमाणत्वात्।

न च 'एतादृशवचसां परार्धजन्मग्रहणोत्तरं मुक्त्युत्पत्तावप्युपपत्तिसंभवात्, तत्राव्यवहितोत्तरत्वस्यानुक्तत्वात् पञ्चम्याः प्रयोजकत्वार्थकत्वस्यापि सत्त्वात्, प्रयोजकत्वमात्रस्य च परार्धजन्मव्यवधानेऽपि संभावात्, कथं 'सप्तजन्मावधि तव पुत्रो नैव च नैव च' इत्यादिवचसामुक्तार्थकत्वे प्रमाणत्वं स्यात् ?' इति वाच्यम्। तथा सत्यात्मदेवब्राह्मणस्य तज्जन्मोत्तरं परार्धजन्मनामपि संभवात् 'सप्तजन्मावधि तव पुत्रो नैव नैव च' इत्यस्य वचसो यथाश्रुतार्थकत्वस्यैवोपपत्तेः 'तव सप्तजन्मपर्यन्तं पुत्राभावो लिखितोऽस्ति येषु सप्तजन्मसु इदं वर्तमानं जन्म सप्तममस्ति' इत्यर्थकत्वकल्पनायाः 'यावति काले मानवीयानि सप्तजन्मानि व्यतियन्ति तावत्कालपर्यन्तं तव पुत्रो नास्ति' इत्यर्थकत्वकल्पनाया वा आवश्यकत्वस्यैवाभावात्। पञ्चम्याः प्रयोजकत्वार्थकत्वस्येव हेतुत्वार्थकत्वस्यापि सत्त्वात् हेतुत्वार्थकत्वेन गृहीतेन 'तज्जन्मन्येव आत्मदेवब्राह्मणः श्रीकृष्णमाप' इत्यर्थकत्वे दर्शितलम्बश्लोकस्य गृहीते एव तदुपपत्तये पुत्राभावप्रतिपादकस्य वचसस्तादृशायथा-श्रुतार्थकत्वस्य कल्पनीयत्वात्।

न च 'यद्यदृष्टविपरीतं न किंचिदपि कथमपि भवितुं शक्नोति' इत्येव स्वीक्रियते, तर्हि—

'पौरुषेणैव सिद्ध्यन्ति कार्याणि न मनोरथैः।
न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः॥

उद्योगिनं पुरुषसिंहमुपैति लक्ष्मी-,
दैवेन देयमिति कापुरुषा वदन्ति।
दैवं निहत्य कुरु पौरुषमात्मशक्त्या
यत्ने कृते यदि न सिद्ध्यति कोऽत्र दोषः॥'

इत्यादिवचांसि कथमुपपद्येरन्? पूर्वजन्मकृतकर्मात्मकस्यादृष्टस्यैव दैवपदाभिधेयत्वात्। यथोक्तम्-

न च 'पूर्वजन्मकृतं कर्म तद्दैवमिति चोच्यते इति वाच्यम्, तादृशभावनायाः सर्वप्राणिष्वनुत्पत्तेः, केषुचिदेवोत्पत्तेस्तस्या अपि भावनाया अदृष्टेनैवोत्पादनीयत्वात्, अदृष्टविपरीतकार्योत्पत्तेस्ततोऽनुपपत्तेः, येषां पौरुषविधायकमदृष्टमस्ति तेषां तादृशभावनापुरस्सरं पौरुषं भवति येषां पौरुषप्रतिरोधकमदृष्टमस्ति तेषां 'यदभावि न तद् भावि भावि चेन्न तदन्यथा।'

इति चिन्ताविषघ्नोऽयमगदःकिं न पीयते? 'इति भावनया तादृशादृष्टभावितया पौरुषं प्रतिरुध्यते' इति स्थिते- र्विद्यमानत्वात् अदृष्टविपरीतकार्योत्पत्तेः कथमप्युपपादयितुमशक्यत्वात्। दुरतिक्रमोऽयमदृष्ट-प्रभावो वर्णितः।

तादृशादृष्टाधिष्ठातुर्भगवतश्चासीमानं प्रभावं न कोऽपि वर्णयितुं प्रभवति। 'ननु इदमेव भगवत्प्रभाववर्णनमस्ति यत्-'भगवतश्चासीमानं प्रभावं न कोऽपि वर्णयितुं प्रभवति' इति, तत्कथं भगवत्प्रभावो वर्णयितुमशक्यतया वर्ण्यते?' इति चेत्-न, 'दृष्टान्तप्रदर्शनपुरस्सरं बोधयितुं न शक्यते, भगवत्प्रभाव-दृष्टान्तीभवनयोग्यस्य प्रभावान्तरस्याभावात्, विना- दृष्टान्तप्रदर्शनं च कस्यापि विषयस्य सम्यग् बोधयितुमशक्यत्वात्' इति तदर्थत्वात्। अत एव दृष्टान्तं विना न्यायो न भवति=सर्वत्र परार्थानुमाने दृष्टान्तप्रदर्शनमनिवार्यं भवति। स्वार्थानुमानमपि दृष्टान्तं विना स्फीतं न भवति, पर्वते धूमदर्शनोत्तरं व्याप्तिस्मरणं भवति 'यत्र यत्र धूमस्तत्र तत्राग्निः यथा महानसे, यत्र वह्निर्नास्ति तत्र धूमोऽपि नास्ति, यथा गङ्गायाम्' इति, विनादृष्टान्तमिदं व्याप्तिस्मरणमप्युपपन्नं न भवति, व्याप्तिस्मरणेऽनुपपन्नेऽनुमित्युपपत्तेः का संभावनाऽपि? अत एव 'पर्वतो वह्निमान्' इति स्वार्थानुमानमपि अन्वयव्यतिरेक्यनुमानमुच्यते। तस्य 'अत्रानुमाने अन्वयदृष्टान्तोऽप्यस्ति व्यतिरेकदृष्टान्तोऽप्यस्ति इत्येव त्वर्थः।'

तेन च भगवता एतादृशानि अनन्तानि ब्रह्माण्डानि प्रतिक्षणमुत्पादयितुं विलापयितुं च शक्यन्ते, तेनैव च भगवता धार्यन्तेऽपि, कल्प्यतां भगवतोऽनन्तमूर्धत्वमस्ति, एकत्रैवापि मूर्धनि अनन्तान्यपि ब्रह्माण्डानि परमाणुवत् संलक्ष्यन्ते, यथोक्तं श्रीमद्भागवते-

'भूमण्डलं सर्षपायति यस्य मूर्ध्नि, तस्मै नमो भगवतेऽस्तु सहस्रमूर्ध्ने।
(६ स्क०, १६ अ०, ४८ श्लो०)

दशोत्तराधिकैर्यत्र प्रविष्टः परमाणुवत्।
लक्ष्यतेऽन्तर्गताश्चान्ये कोटिशो ह्यण्डराशयः॥'
(३ स्क०, ११ अ०, ४० श्लो०)

'ननु कथं भगवतोऽनन्तमूर्धत्वमुच्यते? तस्य तु शास्त्रेषु सहस्रमूर्धत्वं सहस्राक्षत्वं सहस्रपात्त्वमेव भणितमस्ति। तथा हि-

'सहस्रशीर्षाः पुरुषः सहस्राक्षः सहस्रपात्।' इति। (पुरुषसूक्ते)

'यं वै श्वसन्तमनु विश्वसृजः श्वसन्ति,
यं चेकितानमनु चित्तय उच्चकन्ति।
भूमंडलं सर्षपायति यस्य मूर्ध्नि,
तस्मै नमो भगवतेऽस्तु सहस्रमूर्ध्ने॥ इति च।
*(श्रीमद्भा० ६, स्क० १६, अ० ४८ श्लो०)'*

इति चेन्न। तत्र सहस्रपदस्यानन्तार्थकत्वात्। 'तत्र किं प्रमाणम्?' इत्यत्रोच्यते-

अस्माभिर्जन्मवेलायामेव मातुः स्तन्यं पातुमिष्यते, इच्छां प्रति इष्टसाधनताज्ञानस्य कारणत्वात्, तयेच्छयाऽऽस्माकं पूर्वजन्मानुमीयते, यत्रास्माभिर्मातुः स्तन्यं पीतमासीत्, ततस्तृप्तिर्जाताऽऽसीत्, तादृशतृप्तिसाधनत्वस्मरणेनैवेदानीं मातृस्तन्यपानेच्छाया उपपत्तेः, अन्यथाऽस्या इच्छाया उपपत्यसंभवात् पूर्वजन्मभवया च तादृशेच्छया तत्पूर्वजन्मानुमानमित्येवं संसारस्यानादित्वं सिद्धयति। वाराणस्यादिमुक्तिपुरीमृतानां मुक्तिर्भवति, एकस्मिन्नेवाहोरात्रे तादृशपुरीषु कोटिशो जीवा म्रियन्ते, अन्यत्रापि मृताना- माध्यात्मिकज्ञानपूर्णानां मुक्ति र्भवति तथाऽप्यद्य यावत् सर्वजीवमुक्तिः सम्पन्ना नास्ति, अमुक्तानां जीवानां यत्र तत्र सर्वत्र संमर्द एव दरीदृश्यते, तेन प्रतीयते जीवानामानन्त्यम्, तेन प्रतीयते भगवतोऽनन्तमूर्धत्व- मनन्ताक्षत्वमनन्तपात्त्वं च।

न च 'जीवानामानन्त्योपपत्तये भगवत एकत्रैव मूर्धन्यनन्तानामेव ब्रह्माण्डानां सत्त्वमङ्गीक्रियताम्' इति वाच्यम्। तर्हि तदितरैकोनसहस्रमूर्धस्वीकार वैयर्थ्यापत्तेः। न च 'अनन्ता जीवाः समभागेन विभज्यन्तां सहस्रमूर्धसु' इति जीवानामानन्त्येऽपि भगवतः सहस्रमूर्धत्वं, भगवतः सहस्रमूर्धत्वेऽपि जीवानामानन्त्यं वोपपद्यत एव' इति वाच्यम्। अनन्तजीवानां समतया सहस्रभागविधानासंभवात्, समतयाभागद्वयविधानस्यापि अनन्तजीवानामसंभवात् 'कियद्भिरर्धं भागं मंस्यन्ते भवन्तः?' इति प्रश्नस्योत्तराभावात्। न च 'न्यूनाधिकभावेनैव स्थाप्यन्तां जीवाः सहस्रमूर्धसु, तथापि न काऽपि क्षतिः' इति वाच्यम्। 'कुत्र न्यूनभावेन कुत्राधिकभावेन स्थाप्यन्ताम्' इत्यत्र विनिगमकाभावात्, 'कुत्र कियन्न्यूनभावः कुत्र कियदधिकभावः?' इति प्रश्ने निरुत्तरत्वापत्तेश्च। किंच, यस्य शक्तिसीमा नास्ति तस्य मूर्धसीमा कथं स्यात्? भगवति यदस्ति तत्सर्वमसीमितमेवास्ति।

'तादृशेन भगवता स्वप्रकालिकं तत्तज्जनार्थं तत्तददृष्टानुरूपं विविध जगत् तावच्छीघ्रमुत्पाद्यते तावच्छीघ्रं विलाप्यते च' इत्यत्र कोऽपि किमप्याश्चर्यं मन्यते चेत् स भगवच्छक्त्ययनभिज्ञोऽस्ति, तेन भगवच्छक्तिज्ञानाय प्रयतितव्यम्, तेन भगवच्छक्तिज्ञानाय भगवद्भक्तिः कार्या, भगवद्भक्तिं विना भगवच्छक्तिर्न ज्ञायते। यावत् 'स्वप्रकालिकानि तत्तदनन्तजनाना तत्तददृष्टानुरूपाणि अनन्तानि तत्तज्जगन्ति भगवता तत्तदुपादानान्यादाय निरतिशयशीघ्रमुत्पादयितुं विलापयितुं च शक्यन्ते, तत्तददृष्टानुसारं सन्पन्नतत्तदावश्यकतानुसारं तथा तथा शीघ्रशीघ्रतरशीघ्रतमभावेन मन्दमन्दतरमन्दतम-भावेनोत्पाद्यन्ते विलाप्यन्ते, जाग्रदवस्थीयविषयेऽपि भगवतः सैव कथाऽस्ति, यत्र कुत्रापि भगवद्विषये तादृश्येव स्थितिरस्ति, एतादृशकार्यसम्पादनं भगवतो लीला विद्यते, (लीला नाम 'स्वल्पतममपि काठिन्यं तादृशकार्यसम्पादने भगवतो न भवति' इत्यर्थः। विना स्वल्पममपि काठिन्यं विहितकर्माणि लीलापदेनोच्यन्ते, सकाठिन्यं विहितकर्माणि लीलापदेन नोच्यन्ते, अत एव भगवत्कर्माण्येव लीलापदेनोच्यन्ते। इयं भगवतो लीला, भगवल्लीलाश्रवणेन आत्मा शुद्धो भवति, श्रूयन्तां भगवतोऽन्या अपि लीला' (इत्येवं) नास्मदीयकर्माणि। स एव भगवान् तत्तददृष्टानुसारं तत्तल्लोकानपि सृजति एवं विधानि सर्वाण्यपि कार्याणि भगवतो लीलारूपाण्येव सन्ति' इत्यत्र विस्मयो न दूरीभवति तावत् 'ममेदानीं यावत् भगवच्छक्तिज्ञानं जातं नास्ति'



इति ज्ञातव्यम्, यावत् भगवच्छक्तिज्ञानं न जायते तावत् 'मयि पूर्णभगवद्भक्तिर्जाता नास्ति' इति ज्ञातव्यम्। कुतः ? भगवति प्रसन्ने किमपि दुर्लभं नास्ति, भगवत्प्रसन्नतायै भगवद्भक्तिसदृशः समीचीनमार्गो नास्ति। यथोक्तम्-

'तुष्टे च तत्र किमलभ्यमनन्त आद्ये
किं तैर्गुणव्यतिकरादिह ये स्वसिद्धाः।
धर्मादयः किमगुणेन च कांक्षितेन
सारञ्जुषां चरणयोरुपगायतां नः॥

*प्रह्लाद उवाच*

ब्रह्मादयः सुरगणा मुनयोऽथ सिद्धाः
सत्त्वैकतानमतयो वचसां प्रवाहैः।
नाराधितुं पुरुगुणै रघुनाऽपि पिप्रुः
किं तोष्टुमर्हति स मे हरिरुग्रजातेः॥८॥
मन्ये धनाभिजनरूपतपःश्रुतौज-
स्तेजः प्रभावबलपौरुषबुद्धियोगाः।
नारा धनाया हि भवन्ति परस्य पुंसो
भक्तया तुतोष भगवान् गजयूथपाय॥९॥
विप्राद् द्विषड्गुणयुतादरविन्दनाभ-
पादारविन्दविमुखाच्छ्वपचं वरिष्ठम्।
मन्ये तदर्पितमनोवचनेहितार्थ-
प्राणं पुनाति स कुलं न तु भूरिमानः॥१०॥

(श्रीमद्भा०, ७ स्क० ९ अ०)

स वै पुंसा परो धर्मो यतो भक्तिरधोक्षजे।
अहैतुक्यप्रतिहता ययाऽऽत्मा संप्रसीदति॥६॥
वासुदेवे भगवति भक्तियोगः प्रयोजितः।
जनयत्याशु वैराग्यं ज्ञानं यत्तदहैतुकम्॥७॥
धर्मः स्वनुष्ठितः पुंसां विश्वक्सेनकथासु यः।
नोत्पादयेद्यदि रतिं श्रम एव हि केवलम्॥८॥
तस्मादेकेन मनसा भगवान् सात्वतां पतिः।
श्रोतव्यः कीर्तितव्यश्च ध्येयः पूज्यश्च नित्यदा॥१४॥
अतो वै कवयो नित्यं भक्तिं परमया मुदा।
वासुदेवे भगवति कुर्वन्त्यात्मप्रसादनीम्॥२२॥

(श्रीमद्भा० १ स्क० २ अ०)

तस्माद् भारत सर्वात्मा भगवानीश्वरो हरिः।
श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यश्चेच्छताऽभयम्॥५॥

(श्रीमद्भा० २ स्क० १ अ०)' इति।

'ननु भगवद्भक्त्यादिमहत्त्ववर्णनप्रसङ्गे किं भगवच्छ्रवणादेः कर्तव्यत्वप्रतिपादक शास्त्रवचांसि प्रदर्शयति भवान्? किमिदमर्थान्तरं न भवति?' इति चेत्, न, भगवच्छ्रवणादेरेव भगवद्भक्तिपदार्थत्वात् भगवच्छ्रवणदिभिन्नाया भगवद्भक्तेरभावात्। यथोक्तम्—

*हिरण्यकशिपुरुवाच :—*

प्रह्लादनूच्यतां तात स्वाधीतं किंचिदुत्तमम्।
कालेनैतावताऽऽयुष्मन् यदशिक्षद् गुरोर्भवान्॥ २२॥

*प्रह्लाद उवाच :—*

श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम्।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्॥ २३॥
इति पुंसाऽर्पिता विष्णौ भक्तिश्चेन्नवलक्षणा।
क्रियते भगवत्यद्धा तन्मन्येऽधीतमुत्तमम्॥ २४॥

*(श्रीमद्भा० ७ स्क० ५ अ०)'* इति।

'ननु भक्तेरासु नवविधासु श्रवणकीर्तनस्मरणवन्दनदास्यसख्यात्मनिवेदनानां पारस्परिकं वैलक्षण्यं प्रतीयते, एतेषामर्चनपादसेवन योः र पि च पारस्परिकं वैलक्षण्यं प्रतीयते, अर्चनपादसेवनयोर्मिथो वैलक्षण्यं किम्?' इति चेत्, अत्रापि लोके यथा दृश्यते तथा मन्यताम्, लोके चार्चनपदेन चन्दनाक्षतपुष्पाद्यर्पणं गृह्यते, पादसेवनपदेन 'पादौ दुःखितौ = पीडितौ स्याताम्' तौ सुखितौ स्यातां इति धियां विधीयमानं पादमर्दनादिकं गृह्यते, तथैव वैलक्षण्यं भगवदर्चनपादसेवनविषयेऽपि ज्ञातव्यम्। एवं दास्यपादसेवनयोरपि भावादिभेदेन किंचित्किंचिदन्तरं विद्यमानं ज्ञातव्यम्। यथा दास्यं नाम तदीयोक्तिवसीभूतत्त्वम्, यथा 'अत्र गङ्गातटे एव त्वयाऽहोरात्रपञ्चकं विनैवाशनं मां ध्यायता यापनीयम्' इति भगवदुक्त्या तथाकरणं दास्यपदेन ग्रहीतुं शक्यते, न तु पादसेवनपदेनेदं ग्रहीतुं शक्यते।

'ननु भगवद्भक्तिस्त्विदानीमेव सञ्जाता, भगवच्छ्रवणादिकमेव तु भगवद्भक्तित्वेन भणितम्, भगवच्छ्रवणं चेदानीमेव भवत्सकाशाद्विहितम्, भगवत्कीर्तनमपि 'भगवच्छ्रवणम्' उत्युक्त्यैव सम्पन्नम्, स्मर्यमाणोऽपीदानीं भगवानस्त्येवेति भक्त्या अन्यासां विधानामसम्पन्नत्वेऽपि श्रवणकीर्तनस्मरणेति तिसृणां विधानां सम्पन्नत्वात् 'भक्तिः सम्पन्ना' इति वक्तुं शक्यत्वात्, श्रवणकीर्तनस्मरणरूपाया अपि भक्तेर्भक्तित्वात्, तत् कथमिदानीमस्माकमभीप्सितवस्तुषु बहूनां वस्तूनां दौर्लभ्यं विद्यते, यदि भक्त्या भगवान् प्रसीददति प्रसन्नश्च सर्वं ददाति चेत् कथमेवमभीप्सितवस्तुदौलर्भ्यम्?' इति चेच्छ्रूयताम्—

न हि भक्तभोजनेन तृप्तिर्भवतीति भक्तैकपुलाकमात्रभोजनेन तृप्तिर्भवति, तृप्त्यै पर्याप्तभक्तभोजनमावश्यकं भवति, तथैव भगवत्प्रसादाय भक्तेरपि पर्याप्तत्वमावश्यकं भवति, अत एव मयाऽप्युक्तम् 'यावदभीप्सितसर्ववस्तुलाभो न तावत्पर्यन्तं 'मयि पूर्णा भगवद्भक्ति र्नास्ति' इति ज्ञातव्यम्' इति। 'भगवद्भक्तेः पूर्णत्वं किम्?' इत्यत्र श्रूयताम्—

उक्ता नवविधाऽपि भक्तिः प्रत्येकं पुनश्चतुर्विधा भवति तामस-राजस-सात्त्विक-निर्गुणभेदात्। तत्र परकष्टमुद्दिश्य विधीयमाना भक्तिस्तामसी भवति, गोवाजिहस्तिक्षेत्रादिवृद्धिमुद्दिश्य विधीयमाना भक्तिः राजसी भवति, भगवद्भक्त्यादिवृद्धिं सर्वदुःखनिवृत्तिरूपां मुक्तिं वोद्दिश्य विधीयमाना भक्तिः सात्त्विकी भवति, किमप्यनुद्दिश्यैव निरवच्छिन्नरूपेण विधीयमाना भक्तिर्निर्गुणा भवति, इदं निर्गुणत्वमेव भगवद्भक्तौ पूर्णत्वम्। यथोक्तम् श्रीमद्भागवततृतीयस्कन्धैकोनत्रिंशेऽध्याये—

'श्रीभगवानुवाच :—

भक्तियोगो बहुविधो मार्गैर्भामिनि भाव्यते।
स्वभावगुणमार्गेण पुंसां भावो विभिद्यते॥ ७॥
अभिसंधाय यो हिंसां दम्भं मात्सर्यमेव वा।
संरम्भी भिन्नदृग्भावं मयि कुर्यात् स तामसः॥ ८॥
विषयानभिसन्धाय यश ऐश्वर्यमेव वा।
अर्चादावर्चयेद्यो मां पृथग्भावः स राजसः॥ ९॥
कर्मनिर्हारमुद्दिश्य परस्मिन् वा तदर्पणम्।
यजेद् यष्टव्यमिति वा पृथग्भावः स सात्त्विकः॥ १०॥
मद्गुणश्रुतिमात्रेण मयि सर्वगुहाशये।
मनोगतिरविच्छिन्ना यथा गङ्गांऽभसोऽम्बुधौ॥ ११॥
लक्षणं भक्तियोगस्य निर्गुणस्य ह्युदाहृतम्।
अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे॥ १२॥
सालोक्य सार्ष्टिसामीप्यसारूप्यैकत्वमप्युत।
दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः॥ १३॥
स एव भक्तियोगाख्य आत्यन्तिक उदाहृतः।
येनातिव्रज्य त्रिगुणं मद्भावायोपपद्यते॥ १४॥' इति।

दृष्टेयं निर्गुणा भगवद्भक्तिः, इयमेव भक्तिः पूर्णा भक्तिरिति निर्गदितुं शक्यते, अन्यत्रभक्तौ पूर्णत्वं वक्तुं न शक्यते, तत्र काम भावसत्त्वात्, कामभावसत्त्वे वणिग्भावप्रसङ्गात्, 'वणिजे वयं रूप्यकाणि दद्मः, अतः कारणात्ततस्तण्डुला-दीनपीच्छामो गृह्णीमश्च' इत्येतादृश्या भक्त्याः किं पूर्णत्वम्? आशां स्वल्पामप्यकृत्वैव भक्तिः कर्तव्या।

'नन्वस्यां निर्गुणभक्तौ सत्यामेव भगवान् पूर्णं प्रसीदतीत्यागतम्, कथमियं निर्गुणा भक्तिर्भावनीया? 'भगवान् प्रसीदेत्' इत्येतदर्थमेव भक्तिः क्रियते, तादृशभावनया क्रियमाणा च भक्तिः सगुणा सम्पद्यते?' इति चेत्, 'भगवान् प्रसीदेत्' इति भावनां परित्यज्यैव भक्तिर्विधीयताम्, तथा विहिता भक्तिर्निर्गुणा सम्पद्यते, निर्गुणायां भक्तौ सम्पन्नायां भगवान् प्रसीदति। नन्वत्रापि कामभावोऽलुप्त एव दृश्यते? 'भगवान् प्रसीदेत्' इति भावनां परित्यज्यैव भक्ति विधेया, तथा भक्तौ सम्पन्नायां भगवान् प्रसीदेत् इति' इति चेत्, सत्यम्, निर्गुणभक्तिमार्गस्तादृश एवास्ति योऽस्मदिच्छयैव भगवदिच्छां विनाऽस्माभिरेव सम्पादयितुं न शक्यते, अत एव तु वयमनादिकालतोऽद्ययावदनन्तमहा-कल्पव्यतीतावप्यमुक्ता एव स्मः, 'भो भगवन्! भवदिच्छां विना निर्गुणभक्तिमार्गः अस्मदधीनो नास्ति, कथं स मार्गोऽस्माभिर्लभ्येत? भो परमेश्वर! भवानेवास्माकं गतिरस्ति, वयं निर्गुणभक्तिमार्गमनवाप्य संसारे प्रतिरुद्धाः स्मः, यथेच्छसि तथा कुरु, वयं त्वदिच्छयैव संसारे प्रतिरुद्धाः स्मः, त्वदिच्छयैव च निर्गुणभक्तिमार्गमवाप्य त्वत्प्रसन्नतावशात् संसारतो मुक्ता अपि भवितुं शक्नुमः, सर्वदुर्लभवस्तुसौलभ्यं चास्माकं जायते, भवानेव शरणमस्त्यस्माकम्, अन्या गतिर्नास्ति' इत्येवं भगवच्छरणागतैर्भाव्यम्, यथा सनकादिभिर्भूयते स्म, येषां विषये भणितमस्ति श्रीमद्भागवतमाहात्म्य-द्वितीयाध्याये—

'हरिः शरणमेवं हि नित्यं येषां मुखे वचः।
अतः कालसमादिष्टा जरा युष्मान्न बाधते॥ ४८॥

येषां भ्रूभङ्गमात्रेण द्वारपालौ हरेः पुरा।
भूमौ निपतितौ सद्यो यत्कृपातः पुरं गतौ॥ ४९॥' इति।

तादृशभगवच्छरणागतौ जातायां भगवदिच्छयैव निर्गुणभक्तिप्राप्तिद्वारा पूर्णभगवत्प्रसन्नता प्राप्यते, सर्वथा स्वाधीनो नास्त्येव निर्गुणभक्तिमार्गः।

तादृशी भक्तिर्लभ्यतां भगवच्छक्तिर्याथातथ्येन ज्ञायताम्, तदनन्तरं भगवद्विहिते जगच्चाकचिक्ये, स्वप्नादिचमत्कारे, जीवानां जाग्रदाद्यवस्थासु एकावस्थातोऽवस्थान्तरं प्रति स्वेच्छातो गमनावसरादानात्मककार्ये, सुप्तिप्रबोधसन्धिज्ञान-प्रतिरोधाकार्ये च आश्चर्यलेशोऽपि मनसि न स्थास्यति।

'ननु भवता भणितमिदानीमेव 'सालोक्य सार्ष्टिसामीप्य' इत्यादि, तत्र सार्ष्टिपदार्थः कः? इति चेत्, 'समानैश्वर्य-शालित्वं=भगवदैश्वर्यतुल्यस्वैश्वर्यकत्वं सार्ष्टित्वम्' इति स्वीकर्तुं शक्यम्। 'ननु भवतोक्तं पादसेवनात्मकभक्तिविषये 'पादौ दुःखितौ स्याताम्' इति, किं भगवतोऽपि पादौ दुःखितौ भवतः?' भवत एव' इति चेत्तर्हि भगवत्त्वमेव कथम्? सर्वदुःखक्लेशादिशून्यस्यैव भगवत्त्वात्? इति चेत्, न भगवतः पादौ दुःखितौ भवतः तथापि तथाभावनया तत्सेवनेन वयं सफला भवामः, यथा शालग्रामशिला भगवद्भावनया स्वीक्रियते। अत एव—

'नैवात्मनः प्रभुरयं निजलाभपूर्णो
मानं जनादविदुषः करुणो वृणीते।
यद्यज्जनो भगवते विदधीत मानं
तच्चात्मने प्रतिमुखस्य यथा मुखश्रीः॥ ११॥

*(श्रीमद्भा० ७ स्क० ९ अ०)'*

इत्यादि शास्त्रेषु प्रतिपादितम् इति शिवम्।

***टिप्पणी***

*तार्किकप्रवरैः विद्वत्वरैरेतैः शास्त्रीयेषु विषयेषु लिखिता एतादृशा लेखाः सार्धशतद्वयसंख्यातो (२५०)ऽयधिका विद्यन्ते, येषां सङ्कलनं 'जिज्ञासोत्तरम्' इति 'जिज्ञासाकौतुकम्' इति वा नाम्ना व्यवहृतं विद्यते, तत एव निस्सारितोऽयमेको लेखो विद्यते। संस्कृते, समर्पितजीवनानां स्वामिवराणां स्मृतौ संस्कृतभाषानिबद्ध स्व लेखः शोभेत इति तैः संस्कृतभाषानिबद्ध एव लेखो दत्तः, भाषाऽन्तरानुवादप्रयासो न विहितः अस्माभिरपि सहर्षं सादरञ्चास्मिन् स्मृतिग्रंथे निवेशितः।*



# ❋ वेदेषु एकेश्वरवाद : ❋

**डा० राममूर्ति चतुर्वेदी**
वेदविभागीय भू. पू. प्राध्यापक :
सं. सं. वि. वि., वाराणसी

वेदाः न केवलं भारतवर्षस्य अपितु निखिलस्यापि विश्वस्य निधयः, समस्तप्राणिनामनुग्राहकाश्च वर्तन्ते। अखिलब्रह्माण्डनायकेन परमेश्वरेण सनातनवेदा ब्रह्मणो हृदि प्रहिताः। तस्मादिहैव भारतभूमौ सततचिन्तनपरायणानां तपः पूतचरितानां साक्षात्कृत-धर्माणां वशिष्ठादिमहर्षीणां समाधिवेलायां वेदानामाविर्भावो जातः। वेदानां भारतीयवसुन्धरायामाविर्भूतत्वात् अत्र भारतीयवाङ्मये वेदानामतीव प्रतिष्ठा महत्वपूर्णं स्थानञ्च वरीवर्ति।

**वेदस्य प्रतिपाद्यम् :—**

मुख्यतः वेदस्य द्वे प्रतिपाद्ये वस्तुनी वर्तेते, तत्र प्रथमो धर्मः, द्वितीयं ब्रह्मेति। तत्र संस्कृतवाङ्मये धर्म-ब्रह्मणोः जिज्ञासया दर्शनद्वयं प्रादुभूर्तम्। तत्र प्रथमतः धर्ममधिकृत्य पूर्वमीमांसादर्शनं प्रवर्तते, तस्यादिमं प्रतिज्ञासूत्रम् **'अथातो धर्म जिज्ञासा'** (जै. मी. सू. १/१/१) ततो ब्रह्माधिकृत्य उत्तरमीमांसादर्शनं प्रवर्तते, तस्यादिमं प्रतिज्ञासूत्रम् **अथातो ब्रह्मजिज्ञासा** (ब्र. सू. १/१) अत्र मीमांसा शब्दः पूजित-विचार-वचनः, दर्शनं नाम दृश्यतेऽनेनेति व्युत्पत्या यथार्थतत्त्वावबोधकं शास्त्रमुच्यते। पूर्वोत्तरमीमांसे एव क्रमशः मीमांसादर्शनं वेदान्तदर्शनञ्चेति व्यवह्रियेते। एतावता इदं ज्ञायते, यत् पूर्वमीमांसादर्शनेन धर्मोऽवबोध्यते, तथैवोत्तरमीमांसादर्शनेन ब्रह्मावबोध्यत इति।

**यागादिरेव धर्मः—**

अत्र पुनः जिज्ञास्यते-अथ को धर्मः? किन्तस्यलक्षणमिति? पूर्वमीमांसादर्शनेनात्र समाधियते, यत् यागादिरेव धर्मः, तल्लक्षणञ्च 'वेदप्रतिपाद्यप्रयोजनवदार्थो धर्मः' इति। विश्वस्मिन् विश्वे सर्वविधस्य धर्मस्य मूलश्रोतांसि वेदा एव वर्तन्ते। तद्यथा—

> **वेदोऽखिलो धर्ममूलम्।** मनु. २/६
> **धर्मो विश्वस्य जगतः प्रतिष्ठा॥**
> **यः कश्चित् कस्यचिद्धर्मो मनुना परिकीर्तितः।**
> **स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः॥** मनु. २/७

**यज्ञस्वरूपम् :—**

'यागादिरेव धर्मः' इत्यत्र यागो हि यज्ञस्यनामान्तरमस्ति। शाब्दिकनिर्वचनदृष्ट्या देवपूजा-संगति करणदानार्थकात् यज् धातोः यजयाच......रक्षो नङ् (पा. ३/३/९०) इति सूत्रेण नङ्प्रत्यये कृते यज्ञशब्दो निष्पद्यते। एतावता अयं भावो जायते, यत् यज्ञो नाम-देवानामर्चनम्, दैवैःसह संगतिकरणं, देवेभ्यो दानञ्च स्वाहा वषट्कारादिना।

तत्र श्रौतसूत्रकारेण महर्षिणा कात्यायनेन 'अथ यज्ञं व्याख्यास्यामः' इत्युपक्रम्य 'द्रव्यं देवतात्यागः' इत्यादिना सूत्रेण यज्ञस्वरूपं प्रतिपादितम्। अग्न्यादिदेवतोद्देश्येन आज्यपुरोडाशादिहविर्द्रव्याणामग्नौ त्यागः प्रक्षेपः यागः इति तदाशयः। भाट्टदीपिका-कारेणापि यागपदार्थः तथैव निरूपितः। तद्यथा-यत्र प्रक्षेपाङ्गको देवतोद्देशपूर्वको द्रव्यत्यागोऽनुष्ठीयते, स यागपदार्थः। (भाट्टदीपिका-४/२/२)





**प्रथमो धर्म :—**

'यज्ञो वै श्रेष्ठतमं कर्म' (श. ब्रा. १/७/१/५) इति श्रुत्या यज्ञः क्वचित् वेदोक्तकर्मविशेषः। तथा 'यज्ञो वै विष्णुः' (श. ब्रा. १/१/२/३) (तै. सं. १/७/४) इति श्रुत्या क्वचित् देवदेवो विष्णुः निरूप्यते। देवाः सर्वतः प्रथमं यं यज्ञं सम्पादयामास, तस्मिन् यज्ञे पूजितो यो देवो विष्णुः स यज्ञ इति पक्षः प्रबलः। अत्र प्रमाणबाहुल्यमवलोक्यते। तद्यथा–

**'यज्ञेन यज्ञमयजन्तदेवास्तानि धर्माणि प्रथमान्यासन्'**

*(ऋग्वेद १०/९०/१६ (शु. य. वेद ३१/१६)*

**यज्ञेन वै तद्देवा यज्ञमयजन्त** *(ऐतरेय ब्रा. १/१६)*

अत्र मन्त्रयोः 'यज्ञेन' इति तृतीयान्तं यज्ञपदं कर्मवाचकम्। यज्ञमिति द्वितीयान्तं पदं विष्णुदेवतावाचकम्। पूर्वोक्त मन्त्रब्राह्मणयोरयं भावः इन्द्रादयो देवाः श्रेष्ठतमेन यज्ञकर्मणा तं देवदेवं विष्णुं सर्वतः प्रथमम् अयजन्त–अर्चयामासुः तान्येव कर्माणि प्रथमधर्मरूपाण्यासन्। धर्मभूतस्य विष्णोराराधनात्मकत्वात्।

**यज्ञार्थमेव वेदानामाविर्भाव :—**

वेदस्य प्रतिपाद्यो धर्मो यज्ञद्वारा निष्पद्यते, तत् प्रतिपाद्यं ब्रह्म–'महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनु'रिति स्मृत्या यज्ञक्षपितकल्मषैरेव पुरुषैः साक्षात्कर्तुं शक्यते। अत उभयत्र यज्ञस्यैव प्राधान्यात् यज्ञार्थमेव वेदानां प्राकट्यं समजनि। तद्यथा—

**अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम्।**
**दुदोह यज्ञसिद्ध्यर्थमृग्यजुः सामलक्षणम्॥**

*(मनु. स्मृ. १/२३)*

**ऋचो यजूंषि सामानि निर्ममे यज्ञसिद्धये।**

*(ब्र. पु. १/४२)*

**वेदास्तु यज्ञार्थमभिप्रवृत्ताः।**

*(वि. धर्मोत्तरपु. ६/१०४)*

इत्यादीनि स्मृतिपुराणोक्तवचनानि वेदानां यज्ञार्थमेवाविर्भावं प्रमाणयन्ति।

अपि च यज्ञविद्या सृष्टिप्रपञ्चस्य आधारशिला इत्युच्यते। सृष्ट्यादौ विधात्रा प्रजापतिना प्रजानां सर्जनावसरे ताभिस्सह यज्ञविधानमपि संसृज्य ताः प्रति प्रोक्तं यत् अनेन यागकर्मणा यूयं देवान् प्रीणयत, प्रीणिताश्च देवाः युष्मानिष्टप्रदानेनोपकुर्वन्तु, तथा च प्रसन्नैः देवैर्दत्तान् भोगान् प्रथमतः तेभ्यः प्रदाय पश्चात् स्वयमपि भोक्तव्यं युष्माभिः। तथा प्रोक्तं भगवता कृष्णेन गीतायाम्—

**सह यज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः।**
**अनेन प्रसविष्यध्वमेष वोऽस्त्विष्ट-कामधुक्॥**
**देवान् भावयतानेन ते देवा भावयन्तु वः।**
**परस्परं भावयन्तः श्रेयः परमवाप्स्यथ॥**
**इष्टान्भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः।**
**तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एवं सः॥**

अन्नाद् भवन्ति भूतानि पर्जन्यादन्नसंभवः॥
यज्ञाद् भवति पर्जन्यो यज्ञः कर्मसमुद्भवः॥
कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षर-समुदभवम्॥
तस्मात् सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम्॥

*श्रीमद्भगवद्गीता-३।१०-१५*

**देवमनुष्ययोर्मिथः साकांक्षत्वम्—**

सृष्टिप्रपञ्चे परमेश्वरेण प्रत्येकस्य चेतनापदार्थस्य जडपदार्थेन सह उपकार्योपकारकभावः सम्बन्धः प्रतिष्ठापितः। पौराणिकमान्यतानुसारं सृष्टिकर्त्रा विधात्रा दिव्यशक्तिसमन्वितान् देवान् संसृज्य तेभ्यो द्युलोकस्य दिव्यमनन्तसौख्यसाम्राज्यं प्रदत्तम्। ततो मानवाँश्चोत्पाद्य तेभ्यो व्रीहियवादिहविर्द्रव्योत्पादयित्र्याः पृथिव्याः साम्राज्यं प्रदत्तम्। पुनः देवमनुष्ययोः पारस्परिकं सापेक्ष्यं भवेदिति हेतोः द्युलोकः पृथिवीलोकाधीनः पृथिवीलोकश्च द्युलोकाधीनः कृतः। द्युलोके वसन्तो देवा दिव्यानन्तवैभवसम्पन्ना अपि स्वात्मजीवनाय मानवैर्दीयमानं यज्ञीयहविरन्नञ्च सततं कामयन्ते। तथा च पृथिवीलोकस्था मानवा अपि देवेभ्योऽन्नरसनिष्पादनक्षमां सुधामयीं जलवृष्टिं वनस्पत्यौषधसम्पत्तये नितरामभिलषन्ति। तद्यथा-शतपथब्राह्मणे—

इतः प्रदानात् हि देवा उपजीवन्ति। यदान्नं होमान् जुहोति देवानेव तत्प्रीणाति। (१३.२.१.१)

अपि च— **अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते।**
**आदित्याज्जायते वृष्टिः वृष्टेरन्नं ततः प्रजाः।** (मनुस्मृ० ३.७६)

एवं रीत्या देवमनुष्यौ मिथः साकांक्षौ अन्योन्यस्य मनोऽभिलाषं पूरयतः।

देवमनुष्ययोरेतादृशो मैत्रीभावः तेनोभयलोकयोः सम्बर्धनं भवति। सिद्धान्तोऽयं वैदिक-सनातन-धर्मानुयायिभिः सर्वैरपि स्वीक्रियते।

**यागस्य द्वैविध्यम्—**

ब्राह्मणग्रंथानुशीलनेनेदं ज्ञायते यद् यागोद्विधा इति। तत्र प्रथमः प्राकृतो यागः, द्वितीयोऽनुकृतियागः। प्राकृतो यागः सृष्टेरारम्भकालादेव इन्द्रादिदैवैः सूर्यचन्द्रादिग्रहनक्षत्राभिमानिदेवताभिश्चानुष्ठीयमानो निरन्तरं प्रचलति। अनुकृतियागश्च प्रथमं वशिष्ठादिमहर्षिभिः पश्चात् वेदविद्भिर्द्विजातिभिर्यथाधिकारमनुष्ठीयते।

शास्त्रेषु अनुकृतियागो द्विधा विभक्तः। तत्र प्रथमः श्रौतयागः द्वितीयः स्मार्तयागः। साक्षात् श्रुतिवाक्यैः संप्रचोदिताः यागाः श्रौताः, वेदानुमोदित- स्मृतिपुराणादिभिः प्रतिपादिता यागाः स्मार्ता इत्युच्यन्ते।

**श्रौतयागपरिचयः—**

वेदेषु नित्य-नैमित्तिक-काम्यानुरोधेन नैके श्रौतयागाः वर्णिताः, तेषां समेषां यागानां प्रकृतिभूतेषु पञ्चयागेष्वन्तर्भावा दृश्यते। ते च सन्ति प्रकृतिभूता यागाः-अग्निहोत्रम्, दर्शपूर्णमासः, चातुर्मास्यम्, पशुयागः, सोमयागश्चेति।

पुनः कल्पसूत्रकारैः श्रौतयागानां यत्किञ्चित् स्वरूपसाम्यमधिकृत्य समुदायद्वयं कृतमस्ति। तत्र प्रथमो हविर्यज्ञसमुदायः, द्वितीयः सोमयज्ञसमुदायश्चेति। तत्राद्ये आज्यं पुरोडाशो वा हविर्द्रव्यं भवति, यज्ञानां संख्या सप्त भवति तद्यथा-अग्न्याधेयम्, अग्निहोत्रम्, दर्शपूर्णमासः, आग्रायणम्, चातुर्मास्यम्, निरुढपशुबन्धः, पिण्डपितृयज्ञश्चेति। द्वितीये सोमयज्ञसमुदाये सोमाख्यलताविशेषस्य रस एव हविर्द्रव्यं भवति। अत्रापि मुख्यतया सप्तयागा भवन्ति, तद्यथा-अग्निष्टोमः, अत्यग्निष्टोमः, उक्थ्यः, षोडशीवाजपेयः, अतिरात्रः, आप्तोर्यामश्चेति। अन्येऽपि श्रौतयागाः, यथा—अश्वमेधः, राजसूयः, वाजपेयः, वैश्यस्तोमः अग्निचयनप्रभृतयो वेदप्रतिपादिताः सोमयागेष्वेवान्तर्भूता भवन्ति।

**श्रौतयागाधिकारः —**

श्रौतयागेषु न सर्वेषामविशेषेणाधिकारो वेदसंमतः, अपितु गृहीताग्निकस्य द्विजातिमात्रस्याधिकारो निरूपितः। तत्रापि न सर्वविधयागेषु द्विजातेरधिकारोऽङ्गीकृतः, अपितु केषुचिद् यागविशेषेषु साग्निकानां ब्राह्मणादीनामप्यधिकारो निराकृतः। तद्यथा-वेदप्रतिपादिते 'राजसूय' नामके यागे केवलमाहिताग्ने-राज्ञःक्षत्रियस्यैवाधिकारःशास्त्रसम्मतः, न तत्राग्निहोत्रिणो ब्राह्मणस्य वैश्यस्य वाधिकारो विहितः। क्षत्रियस्यापि राज्याधिष्ठितस्यैवाधिकारोऽङ्गीकृतः, न वा सर्वस्य क्षत्रियस्य, न वा सर्वस्य राज्ञोऽधिकारो वेदसम्मतः। एवमेववैश्यस्तोमनामकेयागे केवलं वैश्यास्याधिकारो विहितः, न तत्र ब्राह्मणः क्षत्रियो वाधिकृतो भवति। एवमेव गवेधुकेष्टौ केवलं निषादस्थपतिरधिकृतो भवति, न तत्र ब्राह्मणः क्षत्रियो वैश्यो वाधिकृतो भवति। एवमेव रथकारास्याधानमात्रेऽधिकारो निरूपितः। रथकारस्तु 'माहिष्येण करण्यान्तु रथकारः प्रजायते' इति स्मृत्या जातिविशेषः। ब्राह्मणेन क्षत्रियायां जातो माहिष्यः, क्षत्रियेण वैश्यायां जाता कन्या करणी उच्यते।

**स्मार्तयागः—**

स्मार्तयागानां विधानं तत्तद्वेदशाखासम्बद्धैर्गृह्यसूत्रैः स्मृतिपुराणैश्चापि क्रियते। गृह्यसूत्रोक्तयागेषु चरूपाकविधानात् केचन स्मार्तयागाः पाकयज्ञाभिधानेनापि व्यवह्रियन्ते। पारस्करगृह्यसूत्रे ग्रन्थकारेण हुताहुतप्रहुत-प्राशिताख्यप्रकारचतुष्टयेन पाकयज्ञानां विभाजनं कृतमस्ति। अन्यैश्च गृह्यसूत्रकारैः पाकयज्ञानां प्रकृतिरूपेण सप्तसंख्या निर्धारिता। तद्यथा-औपासनहोमः वैश्वदेवः, पार्वणं, अष्टकामासिकश्राद्धम्, श्रवणाकर्म, शूलगवश्चेति। एतेषु केचन एव सम्प्रति अनुष्ठीयन्ते। सम्प्रति श्रौतयागानां दुरवबोधतया दुस्सम्पाद्यतया चानुष्ठानमत्यल्पं क्वाचित्कमेव श्रूयते, स्मार्तयागानुष्ठानन्तु अद्यापि बहुत्र श्रूयते दृश्यते च।

**यज्ञाङ्गानि—**

ब्राह्मणग्रन्थेषु यज्ञानां पञ्चाङ्गानि वर्णितानि सन्ति। तानि यथा—देवता, द्रव्यं, मन्त्रः ऋत्विक्, दक्षिणा चेति। एतेष्वन्यतमाभावेन न हि यज्ञो साधुविधिना सम्पादयितुं शक्यते। तत्र देवतास्तु दिव्यैश्वर्यसम्पन्ना वर्गत्रये विभक्ताः भवन्ति। तत्र प्रथमो वर्ग आजानदेवतानाम्, द्वितीय आजानजदेवतानाम्, तृतीयः कर्मदेवतानाम्। तत्र पृथिवी-जल-तेजोवाय्वाकाशादयः सूर्यचन्द्रादयो ग्रहाश्चाजानदेवता भवन्ति, एताः सृष्टेरादावेव परमेश्वरेण सृष्टिसञ्चालनार्थमाविर्भाविताः। वेदोक्तकर्मानुष्ठानजन्य-पुण्यप्रभावेण देवत्वमधिगताः कर्मदेवताः भवन्ति। यथा दिव्यपितरो मरूद्गणाश्च। पुन एता एव कर्मदेवता नैजपुण्यप्रभावेण आजानदेवताप्रसादेन च दिव्योन्नतिङ्गता आजानजदेवताः भवन्ति यथा इन्द्रकुबेरादयः।

**देवताः —**

देवता अलौकिकशक्तिसम्पन्ना एका सत्यपि स्वसामर्थ्यादिककालावच्छेदेन नैकत्र नैकरूपेणात्मानमुपस्थापयितुं प्रभवन्ति। तद्यथा-निरूक्तशास्त्रे दैवतकाण्डे यास्काचार्येण निर्दिष्टं यत्—

"तासां महाभाग्यादेकस्या अपि बहूनि नामधेयानि भवन्ति। महाभाग्योदयात्तासां एक आत्मा बहुधा स्तूयते। एकस्यात्मनोऽन्ये देवा प्रत्यङ्गानि भवन्ति।" (नि. ७/२)

अत्र ब्रह्मसूत्रभाष्यकर्त्रा आद्यशंकराचार्येणापि देवतानामलौकिकं सामर्थ्यं प्रकटीकृतम्। तद्यथा—

एकैकादेवता बहुभीरूपैरात्मानं प्रविभज्य बहुषु यागेषु युगपदङ्गतां गच्छतीति परैश्च न दृश्यते, अन्तर्धानक्रियायोगात्। (ब्र.सू.शा.भाष्य. १/३/२७)

**द्रव्यम् —**

यज्ञेषु देवताभ्योऽन्नरसमूर्कतत्त्वरूपं प्रापणार्थम् अग्नौ प्रक्षेपणीयं वेदविहितं वस्तु हविर्द्रव्यमुच्यते। तद्यथा-आज्यं, चरू, पुरोडाशः, तिलाः, तण्डुलाः सोमरसादयश्च। अग्नौ दीयमानं हविः देवैरमृतरूपेण प्राप्यते, तदेवामृतधर्माणां देवानां जीवनाधारकं जायते। यथाहि शतपथब्राह्मणे-हुत प्रदानाद्धि देवा उपजीवन्ति। यदन्नं होमाञ् जुहोति, देवानेव तत्प्रीणाति।

**मन्त्रः —**

मन्त्रो हि यज्ञस्य तृतीयमङ्गं मन्यते। मीमांसकरीत्या मन्त्रा अनुष्ठेयद्रव्यदेवताक्रियास्मारकाः चैतन्यदेवताविग्रहाश्च भवन्ति। यज्ञेषु शुद्धोच्चारितमन्त्र-प्रभावेण कर्तुरिष्टप्राप्तिरनिष्ठपरिहारश्च जायते। कदाचित् अशुद्धोच्चारणेन फलवैगुण्यमपिं जायते। तद्यथा महाभाष्ये महर्षिणा पतञ्जलिना प्रोक्तमस्ति—

मन्त्रो हीनः; स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थः
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्॥

(म.भा. पश्पशाह्निके)

**ऋत्विक् —**

वेदोक्तकर्मणां सम्पादनकुशलो ब्राह्मण एव ऋत्विक् भवति। प्राधान्येन होताऽध्वर्युर्ब्रह्मौद्गातेति चत्वार ऋत्विजः क्रमशः ऋगादिचतुर्वेदसम्बद्धा भवन्ति। सोमयागे प्रत्येकस्य एकैको गणो भवति, प्रत्येकस्मिन् गणे चत्वारश्चत्वार ऋत्विजो भिन्ननामधेया भवन्ति। सर्वमाहत्यैतेषां संख्या षोडश भवति।

**दक्षिणा—**

वैदिकसाहित्ये दक्षिणा यज्ञपत्नीत्वेन सम्मता। यज्ञान्ते ऋत्विग्भ्यो दीयमाना दक्षिणा-गोरूपा, हिरण्यरूपा, अन्वाहार्यपचनरूपा च भवति। "निर्दक्षिणो हतो यज्ञः" इति स्मृत्योक्त्या दक्षिणारहितो यज्ञः न फलाय कल्पते, अङ्गवैगुण्यात्।

एवं रीत्या वेदप्रतिपादितेषु यज्ञेषु बह्व्यो देवता इज्यन्ते। तत्र तत्तद्देवता प्रीत्यर्थं तत्प्रीतिद्वारा स्वकामनासिद्ध्यर्थं-तत्तद्देवताभिधायकैः मन्त्रैः ऋत्विजो देवान् स्तुवन्ति।

यथा हि निरूक्ते यास्काचार्येण किञ्चिदाकूतम्—

"यत्काम ऋषिर्यस्यां देवतायामार्थपत्यमिच्छन् स्तुतिं प्रयुक्ते, यद्दैवतः स मन्त्रो भवति।" (नि. ७/१)

**देवानां क्रमिकविकासपरिणाम एकेश्वरवाद :—**

दार्शनिकदृष्ट्या वेदमन्त्रेष्वभिव्यक्तानां देवानां विषये चत्वारः वादाः भवन्ति। तत्र बहुदेवतावादः, पुरुषवादः, एकाधिदेववादः, एकेश्वरवादश्चेति।

**बहुदेवतावाद :—**

यज्ञेषु बहुनां देवानां स्तवनं क्रियते, तच्च प्रायेण ऋग्वेदमन्त्रैः साममन्त्रैश्च क्रियते। ऋग्वेदमन्त्रैः कृतं देवस्तवनं शस्त्रमुच्यते।[१] तथा सामवेदकृतं देवस्तवनं स्तोत्रमुच्यते।[२] ऋच्यध्यूढ़ साम ग़ीयते' इत्युक्त्या ऋचामेव गानवैलक्षण्यात् स्तोत्ररूपेण गेयता जायते। अतो ह्यत्र ऋग्वेदस्यैव देवस्तावकत्वं सिद्ध्यति। तत्र ऋग्वेदे शस्त्रस्तोत्राभ्यां स्तुत्या देवा बहवः समाम्नाताः, तेषु अग्निः, इन्द्रः, वरुणः, विष्णुः, रुद्रः, सविता, मरूद्गणः, वायुः, सोमः, द्यावापृथिवी, मित्रः, पूषा, उषा, पर्जन्यः, अश्विनौ यम इत्यादयः प्रमुखाः।

"अभिमानिव्यपदेशस्तु विशेषानुगतीभ्यामिति" सूत्रानुरोधेन यज्ञेषु यत्र-तत्र पाषाण-काष्ठादीनां

स्थावरपदार्थानामपि काचिद् अभिमानिनी देवता स्तूयते। तद्यथा ''ओषधे त्रायस्वैनम्'' स्वधिते मैनं हिंसि, ''धिषणासिपार्वतेयी प्रतित्वा पर्वतीवेत्तु। अद्रिरसि वानस्पत्यो ग्रावासिपृथुबुध्नः प्रतित्वादित्यास्त्वग्वेत्तु।[२]

**पुरुषवादः—**

ऋग्वेदस्य दशममण्डले नवतितमे सूक्ते पुरुषाख्यो देवः महदैश्वर्यानन्तशक्तिसम्पन्नः विश्वरूपो विश्वव्यापको विश्वेश्वरश्च वर्णितः। किञ्चिद् पाठभेदेन चतुर्ष्वपि वेदेषु पुरुषसूक्तं पठ्यते। तत्र ''पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्यम्॥ पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतन्दिवि। ततो विराडजायत विराजो अधिपूरुषः॥ इत्यादिभिर्मन्त्रैः सर्वं जगत् तस्यैव पुरूषाख्यस्य देवस्य एकः पादः चतुर्थोंऽश इत्यर्थः। अस्य त्रिपात्=अंशत्रयं द्योतनात्मकेस्वप्रकाशेऽमृतरूपेण तिष्ठति। अयं हि देवो सहस्रशीर्षा, सहस्राक्षश्च तस्मात् सः विश्वव्यापकश्च वर्तते, एतस्मादेव देवात् हिरण्यगर्भाख्यो विराट्पुरूष उत्पद्यते। स एव सर्वतः प्रथममुत्पन्नः सन् सर्वस्य जगतः उत्पादयिता पालकश्च सञ्जातः।

**एकाधिदेववादः—**

ऋग्वेदस्य दशममण्डले शताधिकैकविंशतितमे सूत्रे हिरण्यगर्भाख्यो देवः सर्वदेवाधिपतिरूपः समाम्नातः। पुरूषाख्यदेवादुत्पन्नो विराट्पुरूष एवात्र हिरण्यगर्भाख्यः प्रजापतिरस्ति। स एव समग्रसृष्टिप्रपञ्चोत्पत्तेः प्राक् समजायत, तथा जातमात्र एव अद्वितीयं सत् उत्पत्स्यमानस्य समग्रस्य जगतो भूतस्य च पतिरीश्वरो भवति। तद्यथा—

**हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्।** ऋ० १०/१२१/१
**ततो देवानां समवर्ततासुरेकः** (ऋ० १०/१२१/७ )
**यो देवेष्वधिदेव एक आसीत्** (ऋ० १०/१२१/८)
**यो देवानां नामधा एक एव** (ऋ० १०/८२/३)

इत्यादिमन्त्रैः देवतानामधिदेवः शासकश्चायं प्रजापतिः प्रतीयते।

**एकेश्वरवादः—**

ऋग्वेदस्य दशममण्डले शताधिकैकोनत्रिंशत्तमे नासदीय सूक्ते :—

**आनीद वातं स्वधया तदेकम्।** ऋ० १०/१२९/२
**तपसस्तन्महिना जायतैकम्॥** ऋ० १०/१२९/३
**यो अस्याध्यक्षःपरमे व्योमन्॥** ऋ० १०/१२९/७

इत्यादिमन्त्रेषु तत् पदं पूर्वपरामर्शकमस्ति। तदेकं पुरूषाख्यं परं ब्रह्म प्राणवायुं विना स्वशक्त्या जीवन्नासीदित्याशयः प्रतीयते। तदानीं सृष्ट्यग्रे-विराट्पुरूषोत्पत्तेः प्राक् न मृत्युरासीद् न वामृतं जीवनमासीत्। जीवनमरणयोः सृष्टिसम्बद्धत्वात् सृष्टेः पूर्वं प्रलयकाले वा एतयोरभावः आसीत्। तदानीं ''तपसस्तन्महिना जायतैकम्'' इति श्रुत्या तदेकं वेदैकवेद्यं परं ब्रह्म निर्गुणं निराकारं सदपि सगुणसाकारतां गच्छति, तथा सहस्रशीर्षा पुरुष हिरण्यगर्भाख्यं विराट्पुरुषमुत्पाद्य तेनैव रूपेण जगन्निर्माति।

वैदिकदर्शनपरम्परायां तदेकं परं तत्त्वमेव वेदान्तदर्शने ब्रह्मपदेन निरूप्यते। तदेकं सदपि अग्निमित्रादिरूपेण अनेकरूपतां विभर्ति। तद्यथा—

**एक सुर्पणः स समुद्रमाविवेश स इदं विश्वं भुवनं विचष्टे।** ऋ १०/११४/४
**सुपर्णं विप्राः कवयो वचोभिरेकं सन्तं बहुधा कल्पयन्ति।** ऋ १०/११४/५
**इन्द्रं मित्रं वरूणमग्निमाहुरथोदिव्यः स सुपर्णो गरूत्मान्।**

एकं सद् विप्रा बहुधा वदन्ति अग्निं यमं मातरिश्वानमाहुः। ऋ १०/१६४

तदेकं तत्त्वं तत्पदेनाभिधेयत्वात् बुद्धिस्थपरामर्शकत्वात् वाल्मीकि व्यासादयो महर्षयः वेदैकवेद्यं रामाख्यं कृष्णाख्यञ्च तत्त्वं सगुणसाकारतया व्याचख्युः स एको देवःकदाचित् रामरूपः कदाचिच्च कृष्णरूपो भवति। सोऽपि वेदैकवेद्यो निरूप्यते। तद्यथा—

**वेद वेद्ये परे पुंसि जाते दशारथात्मजे।** वा०रा०

**वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृत् वेदविदेव चाहम्।** गीता १५/१५

**आसामहो……भेजुर्मुकुन्दपदवीं श्रुतिभिर्विमृग्याम्।** श्रीमद्भागवत १०/४७/६१

इत्यादिप्रमाणवचनैः सः एकेश्वरः कृष्ण एव सगुणसाकाररूपेण अस्माभिरूपास्यः। स एव शब्दात्मना वेदरूपः, क्रियात्मना यज्ञरूपो द्रव्यदेवतारूपश्च जायते।

तद्यथा—

**अहं क्रतुरहं यज्ञः स्वधाहमहमौषधम्।**
**मन्त्रोऽहमहमेवाज्यमहमग्निरहं हुतम्।**
**पिताहमस्य जगतो माता धाता पितामहः।**
**वेद्यं पवित्रमोंङ्कार ऋक्साम यजुरेव च।**

गी० ९/१६.१७

वेदवेद्यो धर्मःयागादिरूपः विविधविधिनिषेधाभ्यामतीवक्लिष्ट इति नियमनिष्टणेनैव पुरूषैणेवानुष्ठेयो भवति। एतावता वेदानुमोदितपुराणादिभिर्ज्ञायमानं कृष्णाख्यं परं बह्म सर्वैः सर्वत्र सर्वदैव स्मरणीयतामञ्चति। तपोज्ञाननिष्ठैः मधुसूदनसरस्वतिस्वामिपादैः सत्यमेवोक्तम्—

**ध्यानाभ्यासवशीकृतेन मनसा तन्निर्गुणं निष्क्रियम्**
**ज्योतिःकिञ्चन योगिनो यदि परं पश्यन्ति पश्यन्तु ते।**
**अस्माकं तु तदेव लोचनचमत्काराय भूयाच्चिरम्-**
**कालिन्दीपुलिनेषु यत्किमपि तन्नीलं महो धावति॥**

---

*१. शस्त्रलक्षणम्—अप्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानं शस्त्रम्।*
*२. स्तोत्रलक्षणम्—प्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानं स्तोत्रम्।*
*३. शुक्लयजुर्वेदः १/१९*
*४. शुक्लयजुर्वेदः १/१४*

# ❀ जीवस्य तत्त्वजिज्ञासा ❀

**डॉ० वायुनन्दनपाण्डेयः**
सम्पूर्णानन्द सं.वि.वि., वाराणसी

इह सर्वोऽपि जीव आत्यन्तिकदुःखनिवृत्तिं परमानन्दावाप्तिं च कामयते। प्रायः सर्वोऽपि लोको दैहिक-दैविक-भौतिकेति तापत्रयेण सन्तप्तो दृश्यते। एतान् सततं सन्तप्तान् निरीक्ष्य स्वतो जिज्ञासोदेति किमिदं संसारीणां दुःखं स्वाभाविकं नैमित्तिकं वा ? यदि स्वाभाविकं तदा स्वभावस्यानपायित्वात् दुःखनिवृत्तिरसम्भव एव। यदि नैमित्तिकं तदा नैमित्तिकापायो निमित्तापायेन भवितुमर्हति **"निमित्तापाये नैमित्तिकस्याप्यपायः"** इति सिद्धान्तात्। परं सर्वोऽपि जनः सुखमेव वाञ्छति न कोऽपि दुःखमिति सुखे स्वाभाविकप्रवृत्त्या ज्ञायते सुखमेव स्वाभाविकम्, आत्मनः सच्चिदानन्दमयत्वात्। एवं सर्वोऽपि जनः स्वसत्तां कामयते न कोऽप्यात्मनोऽभावं वाञ्छति तथा सर्वोऽप्यज्ञाननिवृत्तिं कामयते ज्ञानेनैवाज्ञाननिवृत्तिरिति समीक्ष्य निश्चीयते यत् सच्चिदानन्दमय आत्माऽस्ति। दुःखं तु शरीरेऽहन्ताममतासन्धारणात्। तथा हि श्रुतिः—**"न वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति। अशरीरं वावसन्तं न प्रियाप्रिये स्पृशतः"** (छान्दोग्योप० ८/१२/१) अपि च सुषुप्तौ शरीराभिमानाभावात् सुखमेवानुभूयते न तत्र दुःखानुभवो भवत्यतो दुःखं नैमित्तिकमेव न स्वाभाविकमिति सिद्धम्।

यदि शरीराध्यास एव दुःखकारणं तदा मृत्युना शरीरनाशे सति दुःखमपि स्वतो विनष्टं स्यादिति न मन्तव्यम्, सूक्ष्म-कारणशरीरयोर्विद्यमानत्वात्। शरीराध्यासकाले कर्तृत्वाभिमानेन कृतकर्मणां परिपाकवशात् पुनः शरीरपरिग्रहात्। शरीर-परिग्रहश्च दुःखनिमित्तम्। कर्मणां कर्तृत्वाभिमानं च रागवशात् रागश्च प्रियताध्यासात्। तत्र च हेतुरविद्याजनितं द्वैतम्।

अतः शरीरबन्धनिवृत्तये तत्त्वजिज्ञासा विधेयेति। सांख्यशास्त्रमप्येतदेवोपदिशति—

दुःखत्रयाभिघाताद् जिज्ञासा तदभिघातके हेतौ।
दृष्टे साऽपार्था चेत्-नैकान्ताऽत्यन्तोऽभावात्॥ (सांख्याका० १)

इत्थं दृष्टोपायतो दुःखस्यात्यन्तिकनिवृत्तिमसंभाव्य श्रीमद्भागवतं जीवस्य परमं श्रेयस्करं तत्त्वजिज्ञासेति निर्दिशति।
वदन्ति तत्तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयम्।
ब्रह्मेति परमात्मेति भगवानिति शब्द्यते॥ (श्रीमद्भा० १.२.११)

**तस्य तत्त्वस्य ज्ञानार्थमधिकारिभेदात् त्रयो योगा निर्दिष्टाः सन्ति।**

**योगास्त्रयो मया प्रोक्ता नृणां श्रेयो विधित्सया।**
**ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योऽस्ति कुत्रचित्॥**

**(श्रीमद्भा० ११.२०.६)**

एतेषां ज्ञान-कर्म-भक्तियोगानामधिकारिणोऽपि क्रमशो निर्दिष्टाः सन्ति।

ये निर्विण्णाः (क्षणभङ्गुरं जगद् दृष्ट्वाऽत्र रागो दुःखहेतुरिति निश्चित्य विषयेषु तदर्थककर्मसु च निर्वेदशालिनः) सन्ति तेषां कृते ज्ञानयोगो विहितः। कर्मसु अनिर्विण्णानां आसक्तानां कृते कर्मयोगो निर्दिष्टः। उपासनादौ जातश्रद्धानां भक्तियोगो निर्दिष्टः। तथा हि—

**निर्विण्णानां ज्ञानयोगो न्यासिनामिह कर्मसु।**
**तेष्वनिर्विण्णाचित्तानां कर्मयोगस्तु कामिनाम्॥**

यदृच्छया मत्कथादौ जातश्रद्धस्तु यः पुमान्।
न निर्विण्णो नातिसक्तो भक्तियोगोऽस्य सिद्धिदः॥

(श्रीमद्भा० ११.२०.७-८)

श्रीगीतायामपि भगवता प्रोक्तम्—

लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयानघ।
ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम्॥ (गीता ३.३)

तत्र विचार्यते त्रयोऽपि योगाः परस्परं निरपेक्षाः सापेक्षा वा श्रेयःसाधनानि भवन्तीति। तत्र कर्मयोग-ज्ञानयोगयोस्तु साध्यसाधनभावो वर्तते।

परमपुरुषार्थस्य मोक्षस्यावाप्तिस्तु ज्ञानेनैव भवितुमर्हति यदुक्तम्—

ज्ञानादेव तु कैवल्यं प्राप्यते येन मुच्यते। इति।

यतो हि अज्ञानमेव बन्धस्तस्य निवृत्तिर्ज्ञानादेव सम्भवति।
अविद्यैव बन्धः, अविद्यास्तमयो मोक्ष इति तत्त्वविदां निर्णयः।

परमनाद्यनन्तवासनावासितान्तःकरणानां चित्तं नोपशाम्यति। वासनाक्षयं विना चित्तोपशमो न भवति। यावच्चित्तोपशमो-न भवति तावत्तत्त्वविज्ञानं दुर्लभम्। तत्त्वविज्ञानं विना वासनाक्षयो दुर्लभः, इति चक्रकापत्तिः। तद्दोषनिराकरणायैतेषां मिथः साध्यसाधनभावोऽङ्गीकृतो वर्तते। तथा हि—

यावद् विलीनं न मनो न तावद्वासनाक्षयः।
न क्षीणा वासना यावच्चित्तं तावन्न शाम्यति॥
यावन्न तत्त्वविज्ञानं तावच्चित्तशमः कुतः।
यावन्न चित्तोपशमो न तावत्तत्त्ववेदनम्॥
यावन्न वासनानाशस्तावत्तत्त्वागमः कुतः।
यावन्न तत्त्वसम्प्राप्ति र्न तावद् वासनाक्षयः॥
तत्त्वज्ञानं मनोनाशो वासनाक्षय एव च।
मिथः कारणतां गत्वा दुःसाध्यानि स्थितान्यतः॥

(योगवा० उपशम प्र०)

इत्थं तत्त्वज्ञानं विना कालव्यालमुखग्रासनिर्णाशोऽपि भवितुं नार्हत्यतस्तत्त्वज्ञानार्थं चित्तशुद्धिरपेक्षिता। चित्तशुद्धिश्च कर्मयोगात् सम्भवति। श्रुतिरपि कर्मसु प्रेरयति—

**कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः** (ईशावास्योपनि०)

तच्च कर्म त्रिविधम्। शुक्लं कृष्णमशुक्लाकृष्णं च। वेद-विहितं कर्म शुक्लं, निषिद्धं कृष्णमनासक्तितया फलकामनाराहित्येन सिद्ध्यसिद्ध्योः समत्वेन च कृतं कर्माशुक्लाकृष्णं भवति। योगिनां कर्माशुक्लाकृष्णमेव भवति। तदुक्तं पातञ्जलयोगशास्त्रे-कर्म त्रिविधमामनन्ति। **कर्माशुक्लाकृष्णं योगिनस्त्रिविधमितरेषाम्** (पा०यो०द०४.७) इति।

इदं कर्म फलानुसन्धानेन कृतं बन्धनहेतुः **"फले सक्तो निबद्ध्यते"** इति गीतोक्तेः।

**अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम्,** इति च स्मरणात्।

अतः—

योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनञ्जय।
सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते॥

(श्रीमद्भगवद्गीता २.४८)

बुद्धियुक्तो जहातीह उभे सुकृत-दुष्कृते।
तस्माद् योगाय युज्यस्व योगः कर्मसु कौशलम्॥ (श्रीम० गी० २.५०)

इत्थमासक्तिरहितेन सिद्ध्यसिद्ध्योः समेन परार्थं लोकोपकारार्थमीश्वरार्पणबुद्ध्या कृतं कर्म बन्धाय न भवति, भवति च विमुक्तये। तथाहि श्रुतिः प्राह—न कर्म लिप्यते नरे (ई० वा० उप० २)

अपि च— यज्ञार्थात् कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः॥ (गीता ३.९)

इत्थं शास्त्रोक्तं कर्म निष्कामबुद्ध्या कृतमन्तःकरण-शुद्धये भवति।

यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् (गीता १८.५) इत्युक्तेः।

एवं तीर्थाटनं सत्सङ्गगुरुसेवादिकं नित्यं नैमित्तिकं च कृतं चित्तशुद्धये भवति।

आरुरुक्षोर्मुने र्योगं कर्म कारणमुच्यते (गीता ६.९)

एवं चित्तशुद्धौ सत्यां विविदिषा जायते। तदुक्तं श्रुतौ—

तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन इति।

यथा बुभुक्षा भोज्यपदार्थसम्पादने प्रेरयति ततो भोजने कृते सति तृप्तौ जातायां क्षुन्निवृतौ सत्यां निवर्तते, तथैव सत्कर्मानुष्ठानेन ज्ञानप्रतिबन्धकदुरितक्षयात् चित्तशुद्धौ जातायां तत्त्वज्ञानेच्छा जायते। सा च गुरूपासना-श्रवण-मनन-निदिध्यासनादि-भिरात्मसाक्षात्कारे जाते सति निवर्तते।

कर्मोपासनयोस्तु सममुच्चयोऽपि वर्तते। तथा हि स्वयं भगवान् उपदिशति—

यत् करोषि यदश्नासि यज्जुहोषि ददासि यत्।
यत्तपस्यसि कौन्तेय तत् कुरुष्व मदर्पणम्॥ (गीता ९.२७)

अपि च—

पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः॥ गीता ९.२६

भजधातो र्भावे क्तिनि कृते भक्तिशब्दो निष्पन्नः। भजनं भक्तिरिति सेवा एव भक्तिः। सेवा च कायिकी ऐन्द्रियिकी मानसी भेदादनेकधा भवति। मानसी सेवा सर्वोत्तमा भक्तिर्महात्मभिरङ्गीकृता वर्तते। गौडीयपुष्टिमार्गे भक्तिसम्प्रदाये चोक्तम्—

कृष्णसेवा सदा कार्या मानसी सा परा मता।
चेतस्तत्प्रवणं सेवा तत्सिद्ध्यै तनुवित्तजा॥ इति।

मानसी सेवा च—विजातीयप्रत्ययनिरासपूर्वक-सेव्याकाराकारितमानसवृत्तिप्रवाहः इति पूज्यपादाः श्री करपात्रस्वामिचरणाः प्राहुः।

यथा सगुणसाकारसच्चिदानन्दभगवदाकाराकारित-वृत्तिप्रवाहोऽखण्डतया प्रवहति तथैव वेदान्तवेद्यनिर्गुणनिराकार-निर्विकारादृश्या ग्राह्याचिन्त्याव्यपदेश्यस्य भगवतोऽपि स्वरूपविषयिण्यो वृत्तयः प्रवहन्ति। इयमेव भक्तानां ज्ञानिनां च मानसी भक्तिः। इयमेव ज्ञानाभ्यासः, इदमेव निदिध्यासनम्। इत्थं सगुणसाकारब्रह्मस्वरूपाकाराकारिताखण्डवृत्तिप्रवाहः, निर्विकारपरब्रह्मकाराकारिताखण्डवृत्तिप्रवाहोवाऽव्यभिचारिणी भक्तिः। स मानसवृत्तिप्रवाहः कदाचिन्मध्ये मध्ये विच्छिद्य बाह्यप्रपञ्चे प्रसरति तदा व्यभिचारिणी भवति। तदुक्तम्—

मां च योऽव्यभिचारेण भक्तियोगेन सेवते।
स गुणन् समतीत्यैतान् ब्रह्मभूयाय कल्पते॥ (गीता १४.२६)

भक्ताश्च चतुर्विधा भवन्ति।

चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन।
आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ॥
तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते।
प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः॥ (गीता ७.१६-१७)

इत्थं ज्ञानमपि चतुर्थी भक्तिः। ज्ञानी च भगवतोऽत्यन्तं प्रियो भक्तः। यतो हि ज्ञानिनां दृष्टौ **सर्वं खल्विदं ब्रह्म** इति श्रुतेः, सर्वं ब्रह्ममयं वर्तते। स ब्रह्ममयं जगत् पश्यति। तद्दृष्टौ ब्रह्मातिरिक्तं किमपि नास्ति। अतो ज्ञानिनां कृते क्षणमपि भगवानदृश्यो न भवति। सर्वत्र भगवत्येव रमन्ते ते। न वा ज्ञानी भगवतोऽदृश्यतामेति। **ज्ञानीत्वात्मैव मे मतम्** इति भगवदुक्तेः। (गीता ७.१८)

न हि ज्ञानेन सदृशं पवित्रमिह विद्यते।
तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति॥ (गीता ४.३८)
श्रद्धावान् लभते ज्ञानं तत्परं संयतेन्द्रियः।
ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधियच्छति॥ (गीता ४.३९)

येऽपि भगवति मनो निधाय भगवत्परायणाः सर्वभावेन भगवन्तं भजन्ति अकारणकारुणिको भगवान् तेभ्यो बुद्धियोगं वितरति—**ददामि बुद्धियोगं तं येन मामुपयान्ति ते॥** (इति)

ज्ञानयोगेन नैष्कर्म्यसिद्धिं लभन्ते।

असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः।
नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति॥ (गीता १८.४९)
ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति।
समः सर्वेषु भुतेषु मद्भक्तिं लभते पराम्॥ (गीता १८.५४)

गीताया निष्कर्षेऽपि भगवता प्रोक्तम्—

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे॥ (गीता १८.६५)

इत्थं परमतत्त्वं ज्ञानिनां दृष्टौ ब्रह्म, योगिनां दृष्टौ परमात्मा, भक्तानां दृष्टौ भगवान् इति शब्द्यते। केचन कथयन्ति- येऽधिकारिणो दूरे सन्ति तेषां प्रथमं चिन्मात्रस्य ब्रह्मणो बोधो भवति, ते तत्त्वं ब्रह्मेति व्यपदिशन्ति। ये योगिनः सामीप्यं किमपि प्राप्ताः सन्ति ते कतिपयगुणविशिष्टं परमात्मेति तत्त्व व्याहरन्ति। भक्ता अत्यन्तं सान्निध्यं प्राप्ताः समग्रैश्वर्यविशिष्टतया परमं तत्त्वं भगवानिति व्यवहरन्ति। ज्ञानिनस्तु-वस्तुकाल देशपरिच्छेदातीतं निरतिशयं बृहत्तममद्वयं ज्ञानमेव तत्त्वमिति निरूपयन्ति। **यथोक्तम्—तत्त्वं यज्ज्ञानमद्वयम्।** तदेव तत्त्वं ब्रह्म-परमात्मा भगवान् इत्यदिशब्दैरभिधीयते। तदेव तत्त्वं श्रीमद्भागवतदृष्ट्या श्रीकृष्ण एवाऽस्ति। तथा हि—

अहो भाग्यमहोभाग्यं नन्दगोपब्रजैकसाम्।
यन्मित्रं परमानन्दं पूर्णं ब्रह्म सनातनम्॥ इति शम्।





# ✿ साहित्येऽपवर्गविमर्शः ✿

**डॉ० मनुलता शर्मा**
प्रवक्ता,
आर्य महिला डिग्री कॉलेज, वाराणसी

साहित्यपदं काव्यस्य साहित्यशास्त्रस्य च वाचकं वर्तते। 'साहित्यसङ्गीतकलाविहीनः' 'साहित्येसुकुमारवस्तुनि' 'साहित्यपाथोनिधिमन्थनोत्थम्' इत्यादौ साहित्यपदस्य काव्यपरतया' साहित्यदर्पण-साहित्यमीमांसेत्यादौ काव्यालोचकशास्त्रेषु च प्रयोगात्। तत्र अपवर्गस्य विमर्श इति विचारणीयो विषयः। अपोपसर्गपूर्वकाद् वृजी वर्जने इत्यस्माद् धातोः घञि कृतेऽपवर्गशब्दः सिद्धति। तदर्थश्च सर्वविधबन्धनिरासपूर्वकस्वस्वरूपावस्थानरूपः। इत्थं निरस्तनिखिलबन्धनतया विगलितवेद्यान्तरतया च स्वात्मानुभूतिरेव-अपवर्गपदार्थः। सरलतया अस्य अपवर्गशब्दस्यार्थ एवं ज्ञातुं शक्यते। सच्चिदानन्दस्वरूपः परमात्मा-एवान्तःकरणोपहितो जीव इत्यभिधीयते। स च अनाद्यविद्याग्रस्तोऽहन्तया ममत्वेन च बद्धः जडे जगति भ्रामं भ्रामं कदाऽपि शान्तिं न लभते। इत्थं स कर्तृत्व-भोक्तृत्व सुखदुःखादिलक्षणचित्तधर्मेण क्लेशप्रदबन्धेन बद्धो जीवनं यापयति यथोक्तमानन्दवर्धनेन—

**मम मम इति भणतो व्रजति कालो जनस्य।**
**तथापि न देवो जनार्दनो गोचरो भवति मनसः॥[१]**

तस्माद् दुःखप्रदाद् बन्धनान्मुक्तिरेव मोक्षः। स एवापवर्गः। दर्शनग्रन्थेषु अस्यापवर्गस्य स्वरूपविवेचनं बहुधा कृतमस्ति। समस्त-भारतीय-दर्शनानामेकमेवोद्देश्यं; प्राणिनामात्यन्तिकी दुःखनिवृत्तिः परमानन्दावाप्तिश्च। अतः सर्वे दार्शनिकसम्प्रदाया दुःखोच्छेदाय परमानन्दावाप्तये च दुःख-दुःखहेतु-मोक्ष-मोक्षोपाय-रूपचतुर्व्यूहात्मकं सिद्धान्तं प्रतिपादयन्ति। एषु दार्शनिकसम्प्रदायेषु बौद्ध-जैन-न्याय-वैशेषिक-साङ्ख्य-योग-मीमांसा-वेदान्तादिमतावलम्बिनो यां मुक्तिं काङ्क्षन्ति सा क्वचिदविद्यानाशेन, क्वचित् कर्मावरणभङ्गेन, क्वचिद् विवेकेन, क्वचिदज्ञानावरण भङ्गेन च भवति। सर्वेषां मतेषु मुक्तिः दुःखोच्छेदकारिणी; यस्यां सिद्धौ पुरुषो जन्ममरणबन्धनाद् विनिर्मुक्तो भवति। यद्यपि सर्वेषां दार्शनिकानां मतेषु 'मुक्तिः' आत्यन्तिकदुःखनिवृत्तिरूपैवास्ति तथापि तस्या आनन्दरूपतायाः चर्चाऽद्वैतवेदान्ते विशेषतयोपलभ्यते। तत्र ब्रह्मणः स्वरूपं सच्चिदानन्दात्मकमस्ति। अत एव तेषां ग्रन्थे—

**आनन्दात्मकब्रह्मावाप्तिश्च मोक्षः शोकनिवृत्ति[२]श्च इत्युक्तम्।**

**चोक्तम्-ब्रह्मविद् ब्रह्मैव भवति,[३] तरति शोकमात्मवित्,[४] तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय।[५]** इति। अतो मोक्षानन्दो ब्रह्मप्राप्त्या जायमान आनन्दः। योगसाधनेनापि जीवो जन्ममरणबन्धनाद्-विनिर्मुक्तःस्वरूपे प्रतिष्ठितो भवति यत्र केवला चितिशक्तिरेव भासते।[६] अयमेव योगमतानुसारमपवर्ग आनन्दो वा।

---

१. *ध्वन्यालोकः, चतुर्थोद्योतः, पृ. 544*
२. *वेदान्तपरिभाषा, प्रयोजन परिच्छेदः*
३. *मुण्डकोपनिषद्, 3/2/9*
४. *छान्दोग्योपनिषद्, 1/1/3*
५. *श्वेताश्वतरोपनिषद्, 3-8*
६. *पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तिरिति। पातञ्जलयोगसूत्रम् 34*

साहित्ये कीदृशोऽपवर्गो भवति, इत्यस्मिन् विषये चिन्तने कृते काव्यस्य स्वरूपं, तत्प्रयोजनं तदास्वादनञ्च सर्वप्रथमं दृष्टिपथे आयाति। तत्र भामहः—

धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च।
करोति कीर्तिं प्रीतिं च साधुकाव्यनिषेवणम्॥[७]

इति काव्यप्रयोजनानि प्राह। वामन-कुन्तकादिभिरप्येतानि प्रयोजनानि निर्दिष्टानि।[८] मम्मटेनाऽप्येते अर्था भङ्ग्यन्तरेण गृहीताः।[९] तत्र प्रीतिः परनिर्वृतिश्च परमानन्दावाप्तिरेव। इयमेव काव्यस्य सकलप्रयोजनमौलिभूता वर्तते। सा च काव्यास्वादनसमुद्भूता, रसरूपा च भवति। रसश्च आत्मानन्दरूपो भवति। तथा हि तैत्तिरीये,—**'रसो वै सः, रसं ह्येवाऽऽयं लब्ध्वाऽऽनन्दी भवति[९], इत्युक्तम्।** युक्तयोगी समाधिस्थः सन् यथा ब्रह्मानन्दे मग्नो भवति तथैव सहृदया अपि रसानुभवकाले रसानन्दे तल्लीना भवन्ति। साहित्यस्यायमानन्दः काव्यशास्त्रकारैः रसपदेनाभिहितः। आनन्दोऽयमितरविषयानन्दवन्न सातिशयः न वा ब्रह्मानन्दवन्निरतिशयः। पण्डितराजानुसारमयं 'चमत्कारत्वापरपर्यायोऽनुभवसाक्षिको जातिविशेषः।'[१०] रसास्वादनसमये सहृदया यं विलक्षणं चमत्कारमनुभवन्ति सैव चमत्कारः 'सकलविघ्नविनिर्मुक्तसंवित्पदेनाऽभिहितः'।[११] काव्यानुशासानस्य व्याख्याता यं चमत्कारं परिभाषयन् प्राह- **'अद्भुतभोगात्मस्पन्दावेशरूपो हि चमत्कार[१२]'** इति। तदुद्धृतं विश्वनाथेन-**रसे सारश्चमत्कारः सर्वत्राप्यनुभूयते[१३]** इत्यादि। एतस्य फलं विश्रान्तिजननम्। यथोक्तं भरतेन—

दुःखार्तानां श्रमार्तानां शोकार्तानां तपस्विनाम्।
विश्रान्तिजननं काले नाट्यमेतन्मयाकृतम्॥[१४] इति

दण्डिना च **'येन माद्यन्ति धीमन्तो मधुनेव मधुव्रताः'**[१५] इत्यादिभिः शब्दैः रसस्य आनन्दमयता प्रतिपादिता। रुद्रटश्च **'एते रसाः रसवतो रमयन्ति पुंसः'**[१६] इत्याद्युक्त्या रसस्य मनः प्रसादकतामङ्गीचकार। **'सरस्वती स्वादु तदर्थवस्तु निष्यन्दमाना महतां कवीनाम्[१७]** इत्यादिभिः आनन्दवर्धनोऽपि रसस्य स्वादरूपतां जुघोष। **काव्ये रसयिता सर्वो न बोद्धा न नियोगभाक्[१८]'** इत्युक्त्या, रसस्य प्राधान्यं प्रतिपादयन् भट्टनायकः, **योगिनां समाधौ य**

*७. काव्यालङ्कारः 1/2*

*८. काव्यालङ्कारसूत्रवृत्तिः 1/1/5, वक्रोक्तिजीवितम्, 1/2-3*

*९. काव्यप्रकाशः, 1/2*

*१०. तैतिरीयोपनिषद्, ब्रह्मवल्ली, सप्तमोऽनुवादः*

*११. रसगङ्गाधरः, प्रथमाननम्, पृष्ठ 11*

*१२. अभिनवरससिद्धान्तः पृ. 34*

*१३. काव्यानुशासनम्, 2/1*

*१४. साहित्यदर्पणः तृतीयपरिच्छेदः पृष्ठ सङ्ख्या 107*

*१५. नाट्यशास्त्रम् 9/114*

*१६. काव्यादर्शः, 1/51*

*१७. काव्यालङ्कारः 15/21*

*१८. ध्वन्यालोकः 1/6*





**आनन्दः तदपेक्षया रसानन्द उत्कृष्ट** इतिं प्रतिपादितवान्[१९]। अभिनवभारत्यामुद्धृतेन भट्टतौत वचनेन तन्मतेऽपि रस आह्लादमय[२०] इति प्रतीयते।

रसस्य आनन्दरूपताप्रतिपादकोऽभिनवगुप्तः स्वकीयशैवाद्वैतदर्शनानुसारं विवृणोति—

अस्मन्मते तु **संवेदनमेवानन्दघनमास्वाद्यते।**[२१] **सामाजिकानां हि हर्षैकफलं नाट्यम्, न शोकादिफलम्,**[२२] **तथापि तत्र प्रीतिरेव प्रधानम्,**[२३] इत्याद्युक्त्या रसस्यानन्दात्मकतां उद्घोषितम्।

**'ह्लादनिष्यन्दो रसः'** इति प्रतिपादयता महिमभट्टेन रसेन सहृदयानां तथा तृप्तिरुद्भाविता यथा समाधौ योगिनाम्[२४]। **आनन्दनिष्पत्तिरेव काव्यस्य प्रमुखं प्रयोजनम्**-इति मन्वानः कुन्तकश्च, **'काव्यामृतरसेनान्तश्चमत्कारो वितन्यते'** इति व्याहरन् अन्तश्चमत्कृतिमेव परमप्रयोजनं प्राह।[२५]

काव्यप्रकाशस्य स्वकृतमङ्गलपद्ये मम्मटाचार्यः कविभारत्याः सर्वातिशायितां, प्रतिपादयन् तां 'ह्लादैकमयीं नवरसरुचिरां' चाभिदधानः,[२६] काव्यप्रयोजनेषु च सद्यःपरनिर्वृत्तिमेव सकलप्रयोजनमौलिभूतां स्वीचक्रे। हेमचन्द्रोऽपि आनन्दपदार्थं व्याकुर्वन् आनन्दः सद्योरसास्वादजन्या निरस्तवेद्यान्तरा ब्रह्मास्वादसदृशी प्रीतिरिति व्याचख्यौ। प्राह च तत्रैव 'इदं सर्वप्रयोजनोपनिषद्भूतं कविसहृदययोः काव्यप्रयोजनम्।'[२७] अग्निपुराणकारोऽपि सहजानन्दस्याभिव्यक्तिरेव रस इति ब्रूते।[२८]

अस्मिन्नेव क्रमे रसात्मवादी विश्वनाथश्च रसस्वरूपं निरूपयन् रसः अखण्डः, चिन्मयः, स्वप्रकाशानन्दो, वेद्यान्तरसम्पर्कशून्यो ब्रह्मास्वादसहोदरश्चेत्यभिदधे। तथाहि—

---

*१९. लोचनव्याख्यासहितो ध्वन्यालोकः पृष्ठ सङ्ख्या 65*

*२०. वाग्धेनुर्दुग्धं एतं हि रसं यद् बालतृष्णया।*
*तेन नास्य समः स स्याद् दुह्यते योगिभिर्हि यः॥*
*(लोचनसहित ध्वन्यालोकः, प्रथमोद्योतः पृष्ठ - 169)*

*२१. झटित्येव रसा यत्र व्यज्यन्ते ह्लादिभिर्गुणैः।*
*(हिन्दी अभिनव भारती पृष्ठ 14)*

*२२. हिन्दी अभिनव भारती, पृष्ठ 507*

*२३. हिन्दी अभिनव भारती, पृष्ठ 500*

*२४. लोचनटीकायां पृष्ठ सङ्ख्या 66*

*२५. ततो निर्विषयस्यास्य स्वरूपावस्थितौ निजः*
*व्यज्यते ह्लादनिष्यन्दो येन तृप्यन्ति योगिनः॥*
*(व्यक्तिविवेकः, प्रथमो विमर्शः, पृष्ठ 94)*

*२६. वक्रोक्तिजीवितम् 1/5*

*२७. नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम्।*
*नवरसरुचिरां निर्मितिमादधती भारती कवेर्जयति॥*
*(काव्यप्रकाशः 1/1)*
*सकलप्रयोजनमौलिभूतं समनन्तरमेव रसास्वादनसमुद्भूतं विगलित वेद्यान्तरमानन्दम् (तत्रैव। 1/2 वृत्यंशः)*

*२८. सद्योरसास्वादजन्या निरस्तवेद्यान्तरा ब्रह्मास्वादसदृशी प्रीतिरानन्दः। इदं सर्वप्रयोजनोपनिषद्भूतम्।*
*(काव्यानुशासनम् 1/3)*

सत्त्वोद्रेकादखण्डस्वप्रकाशानन्दचिन्मयः ।
वेद्यान्तरस्पर्शशून्यो ब्रह्मास्वादसहोदरः ॥
लोकोत्तरचमत्कारप्राणः कैश्चित् प्रमातृभिः ।
स्वाकारवदभिन्नत्वेनायमास्वाद्यते रसः ॥[२९]

पूर्वोक्तानां सर्वेषां रसवैशिष्ट्यानां निरूपणे कृते सति काव्यजन्यानन्दस्य स्वरूपनिर्धारणं सहजतया कर्तुं शक्यते। रसास्वादसमये सहृदयानां विलक्षणा मनोदशा भवति। तस्मिन् समये सत्वोद्रेको जायते। सत्त्वञ्च 'रजस्तमोभ्यामस्पृष्टं मन इत्युच्यते।'[३०] अर्थात् काव्यानुशीलनेन रजस्तमसी स्व-स्वकार्यकरणेऽसमर्थे भवतः। अयं भावो रजोगुणप्रादुर्भावे मनसि चाञ्चल्यं तमसि च प्रमादमोहादिप्राबल्यं भवति, परं काव्यार्थानुसन्धानसमयें सहृदयानां मनसि चाञ्चल्य-प्रमादमोहादीनां प्राबल्यं भवति। सुखात्मिका च वृत्तिर्भवति। भट्टनायकानुसारं भावकत्वव्यापारेण सहृदयानां मनसि साधारणी-कृतिरूपसहृदयतायाः सञ्चारो भवति, तदनन्तरं भोजकत्त्वव्यापारेण रसो भुज्यते। सहृदयानामयं विचित्रानुभवोऽलौकिकमानसाध्यवसायाश्चास्ति। एतस्य स्वरूपविश्लेषणं क्रियते चेत् तदा स, 'सत्वोद्रेकप्रकाशानन्दमयनिजसंविद्विश्रान्तिसलक्षणो भवति।'[३१]

अयं रसः काव्यानन्दरूपो वेद्यान्तरस्पर्शशून्योऽभिनवगुप्तानुसारं चर्व्यमाणतैकसारोऽस्ति। रसानुभवकाले प्रमातुः तन्मयी भावावस्था भवति ययाऽवस्थया प्रमाता स्वपरतटस्थदेशादिभावनाशून्यः सर्वथाऽऽत्मलीनो भवति। अत एव रसो ब्रह्मास्वादसहोदरपदेनाऽभिहितः। ब्रह्मानन्दः शुद्धचिदानन्दात्मकानुभवो रसानुभवश्च रत्यादिसंवलितचिदानन्दरूप् इति विशेषः।[३२]

अयं रसः अखण्डः; अत्र रसानुभवकाले विभावानुभावव्यभिचारिणां पृथक्-पृथगनुभूतिर्न जायते। परं प्रपाणकरसान्यायेन सर्वेषां मिश्रणेन विलक्षणाऽऽस्वादानुभूतिर्भवति। अपि च तन्मयीभावादेतेषां मात्राभेदः तारतम्यं वा नानुभूयते। यद्यपूर्णं तत्र रसानुभूतिर्न भविष्यति।[३३]

अयं रसः स्वप्रकाशानन्दचिन्मयश्च वर्तते। इयं सा आनन्दमयी चितिः यस्यामिन्द्रियसाध्यताया अभावः, चैतन्यस्य च सद्भावो वर्तते। अपि चैतस्मिन्नानन्दे प्रमाणान्तरापेक्षा नास्ति। 'स्वयं प्रकाशते इति स्वप्रकाशः।'[३४]

अयमानन्दात्मको रसो लोकोत्तरचमत्कारप्राणो वर्तते। यतो हि सः प्रत्यक्ष-परोक्ष-ज्ञाप्य-कार्य-सविकल्पक-निर्विकल्पकनित्यानित्यलौकिकसंवित्तिविनिर्मुक्तत्वादलौकिकः।[३५]

---

२९. *आनन्दः सहजस्तस्य व्यज्यते स कदाचन।*
*व्यक्तिः सा तस्य चैतन्यचमत्काररसाह्वया॥*
*अग्निपुराणम् 339/2*

३०. *साहित्यदर्पणः 3/2, 3*

३१. *सरस्वतीकण्ठाभरणम्, 5/20*

३२. *नाट्यशास्त्रम्, षष्ठोऽध्यायस्यांशभूतः, अभिनवरससिद्धान्तः। पृष्ठ 24*

३३. *साहित्यदर्पणः, तृतीय परिच्छेद 1-28*

३४. *साहित्यदर्पणः, तृतीय परिच्छेद 1-28*

३५. *साहित्यदर्पणः, तृतीय परिच्छेद 1-28*





एतस्य चर्व्यमाणतैकसारस्य, स्वप्रकाशस्य, ब्रह्मानन्द-सहोदरस्य, चिन्मयस्य, लोकोत्तरचमत्कारप्राणस्य रसस्य निष्पतिः कथं भवति। अतो रसनिष्पतिप्रसङ्गेऽपि काव्यानन्दस्य रसस्य महती चर्चा कृता वर्तते।

तत्र रसनिष्पत्तिप्रकारे काव्याचार्यैर्निर्दिष्टम्—

काव्येन समर्पिता विभावादयः सहृदयहृदयं प्रविष्टा भवन्ति। ते च साधारणीभूता ममेति न ममेति च सम्बन्धस्वीकारपरिहाररहिताः सम्भूय अलौकिकं व्यञ्जनारण्यं व्यापारं जनयन्ति। तेन व्यापारेण सच्चिदानन्दात्मनः स्वरूपात्मनोऽज्ञानावरणमपसार्यते। अयं भावोऽयमात्मा वस्तुतः सच्चिदानन्दस्वरूपः परं प्राणिनां हृदये सर्वदा आनन्दानुभूतिं न जनयति। तत्र कारणं अज्ञानावरणमेव। गीतायामप्युक्तम्— अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः।[३६]

अलौकिकेन विभावादिभिः प्रादुर्भावितेन व्यञ्जना—व्यापारेण तदज्ञानावरणमपसार्यते। अपसारिते तस्मिन्नात्मानन्दः प्रकाशते। प्रकाशितश्च विभावादि संवलितान् रत्यादिस्थायिभावान् विषयीकरोति। तद्विषयभूतः विभावादिसंवलितः स्थायिभाव एव रसः। तत्र प्रकाशिते स्वस्वरूपानन्दे विगलितवेद्यान्तरतया विश्रान्तिर्भवति। तदुक्तं पण्डितराजेन 'यथा शरावादिना पिहित्तो दीपः तन्निवृतौ सत्यां स्वयं प्रकाशते सन्निहितांश्च पदार्थान् प्रकाशयति एवमात्मचैतन्यं विभावादिसंवलितान् रत्यादीन् प्रकाशयति।'[३७]

इमे काव्यसमर्पिता विभावादयः साक्षिभास्याः भवन्ति न तु वृद्धिभास्याः। बाह्या हि पदार्था वृत्तिभास्या भवन्ति तथाहि घटादिबाह्यपदार्थे प्रथमं दृष्टिर्याति, दृष्टिप्रणाल्या च चित्रमपि वस्तुस्थानं प्राप्नोति तत्र गत्वा वस्तुन आकारेण परिणतं भवति पुनस्तदाकाराकारितं चित्तमन्तः समुपैति तदा साक्षी प्रकाशयति। अतो बाह्यं ज्ञानं वृत्तिभास्यं भवति। विभावादयस्तु न बाह्या अपितु ज्ञानमयाः। ते साक्षादात्मना भास्या अन्तः साक्षिभास्याः भवन्ति। यथा रङ्गे रजतं, रज्जौ सर्पः, स्वप्ने तुरगादयः।

अयं रस आत्मानन्दः, नित्यः परमावरणभङ्गस्य चर्वणाया वा उत्पत्ति-विनाशाभ्यां रसेऽप्युत्पनिविनाशौ आरोपितौ वर्तेते। यथा मीमांसकादीनां मते वर्णो नित्यः परं कण्ठताल्वाद्यभिघातस्योत्पनिविनाशाभ्यामुत्पन्नो मकार, विनष्टो गकार, इति व्यवहारः सम्पद्यते। आवरणभङ्गस्य विभावादिचर्वणाया वा निवृत्तत्वात् प्रकाशस्य पुन आवृतत्त्वात् विद्यमानोऽपि स्थायी न प्रकाशते। अयं रसानन्दो न लौकिकसुखान्तरसाधारणो यतो हि अयमानन्दोऽन्तःकरणवृत्तिरूपो नास्ति साक्षादात्मानन्दरूपोऽस्ति। इत्थञ्च—भग्नावरणाचिद्विशिष्टरत्यादिस्थायिभाव एव रसः।

श्रुतिस्वारस्याच्चं वस्तुतो रत्याद्यवच्छिन्नाभग्नावरणा चिदेव रसः। इत्थं रसोऽयं विशिष्टात्मा मम्मटादिमते विशेषणीभूता चित् वर्तते। श्रुतिस्वारस्याच्च विशेष्यभूता चिदस्ति। अतो चिदंशमादाय रसस्य नित्यत्वं स्वप्रकाशत्वञ्च सिद्धम्। रत्याद्यंशमादाय अनित्यत्वमितरभाष्यत्वञ्च।[३८]

इयं रसचर्वणा परब्रह्मास्वादात् समाधेः विलक्षणा। विभावादिविषयसंवलितचिदानन्दालम्बनत्वात्। अस्यां रसचर्वणायां सुखांशभाने प्रमाणं किमिति, पर्यनुयोगस्य तुल्यत्वान्न च समाधौ सुखांशभने स्मृतिः प्रमाणं तथाहि सुखमात्यन्तिकं यत् तत्—बुद्धिगाह्यमतीन्द्रियमित्यस्ति; अत्राऽपि प्रमाणं—'रसो वै सः। रसं ह्येवाऽयं लब्ध्वाऽऽनन्दी भवति' इत्यादि श्रुतिः, सकल सहृदयानुभवश्चेति प्रमाणद्वयम्। अत्र पक्षान्तरमप्युपस्थापितं पण्डितराजेन।

---

*३६. साहित्यदर्पणः, तृतीय परिच्छेद 1-28*

*३७. श्रीमद्भगवद्गीता 5/15*

*३८. रसगङ्गाधरः प्रथमाननम् पृ. 91*

काव्यसमर्पितविभावादिचर्वणमहिम्ना सहृदयानां सहृदयावशात् तत् तत् स्थाय्युपहितस्वस्वरूपानन्दाकारा चित्तवृत्तिरुपजायते यथा समाधौ योगिनश्चित्तवृत्तिर्जायते तन्मयीभवनमिति यावत्।[३९]

रसनिष्पत्तिविषयेऽभिधाभावकत्व-भोजकत्वेति व्यापारत्रयं स्वीकुर्वतो भट्टनायकस्यायभभिप्रायः—पूर्वं काव्यस्याविधया बृत्या विभावादय पदार्था निवेदिता भवन्ति ततो भावकत्वेन व्यापारेण शकुन्तलादिषु विभावेषु ये रस विरोधिनो शकुन्तलात्व-दुष्यन्तरमणीत्व कण्वपुत्रीत्वादयो धर्माः तान् प्रतिबध्य कान्तात्वेन रसानुकूलधर्मपुरस्कारेण विभावादय उपस्थाप्यन्ते, इत्थं ते विभावादयः साधारणीकृता भवन्ति। तदुक्तं—

परस्य न परस्येति ममेति न ममेति च।
तदास्वादे विभावादेः परिच्छेदो न विद्यते॥ साहित्यदर्पणः ३.१२

विश्वनाथानुसारम् अयं साधारणीकरणव्यापारो विभावादेरस्ति—

"व्यापारोऽस्ति विभावादेः नाम्ना साधारणीकृतिः। तत् प्रभावेण यस्यासन् पाथोधिप्लवनादयः।"

प्रमाता तदभेदेन स्वात्मानं प्रतिपद्यते।
साधारण्येन रत्यादिरपि तद्वत् प्रतीयते॥ साहित्यदर्पणः ३.९-११

एवं साधारणीकृते सति भोजकत्वव्यापारः समुदेति तेन सत्वोद्रेको भवति। सत्वोद्रेकश्च रजस्तमसी अभिभूय सत्वस्य प्रादुर्भावः। सत्त्वञ्च प्रकाशकं ज्ञानमयं भवति, तस्योद्रेकेण च आत्मसाक्षात्कारो जायते। साक्षात्कारश्चायं स्वचित्स्वरूपस्यात्मनः स्वभावरूपा या निर्वृतिः अर्थात् परमानन्दरूपता, तस्यां विश्रान्तिः। अर्थात् वेद्यान्तस्पर्शशून्यतयावस्थानम्। तत् स्वरूपेण साक्षात्कारेण विषयीकृतो भावनोपनीतः साधारणात्मा रत्यादिः स्थायीरसः। अजात्मसाक्षात्कारस्य विषयीकारणमेष भोगः। अतो भुज्यमानो रत्यादिभोगो वेत्युभयं रसः। अयमात्मनः साक्षात्कारो रत्यादिविषयसंवलितब्रह्मास्वादसविधवर्ती इत्युच्यते।

इत्थं साहित्यस्य अपवर्गः रस, आत्मानन्द एव। अत एव निर्दिष्टं पुर इव परिस्फुरन्, हृदयमिव प्रविशन्, सर्वाङ्गीणमिवालिङ्गन्, अन्यत् सर्वं तिरोदधत्, ब्रह्मास्वादमिवानुभावयन् अलौकिकचमत्कारकारी रसः।[४०] अन्तःकरणवृत्तिविशेषस्य स्थायिनोऽभिव्यक्तौ चैतन्यानन्दस्वरूप आत्माऽपि भासते। सर्वस्मिन् ज्ञाने आत्मभानं नियतं भवति। यतो हि आत्ममनः संयोगादेव ज्ञानं जायते। इत्थञ्च चिदानन्दात्मनि विगलितवेद्यान्तरतया विश्रान्तिरेव रसः। स एव च अपवर्गः। यदि रसे विभावादि विषयस्पर्शेऽपि वर्तते इति सन्देहश्चेत् तदा शान्तो रसो विषयसंवलनस्याभावात् अपवर्गः। यथोक्तं—

यच्च कामसुखं लोके, यच्च दिव्यं महत् सुखम्।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम्॥[४१]

तथाहि—

अहौ वा हारे वा कुसुमशयने वा दृषदि वा
मणौ वा लोष्ठे वा समधिकरिपौ वा सुहृदि वा।

---

३९. रसगङ्गाधरः प्रथमाननम्, रसनिरूपणम् काव्यप्रकाशः साहित्यदर्पणः, तृतीयः परिच्छेदः, चतुर्थ उल्लासः
४०. रसगङ्गाधरः प्रथमाननम्, रसनिरूपणम् काव्यप्रकाशः साहित्यदर्पणः, तृतीयः परिच्छेदः, चतुर्थ उल्लासः
४१. काव्यप्रकाशः, रसनिरूपणेऽभिनवगुप्तमतम्

तृणे वा स्त्रैणे वा मम समदृशो यान्ति दिवसाः।
क्वचित् पुण्यारण्ये शिव शिव शिवेति प्रलपतः॥[४२]

इत्थमेव—

द्राक्षा निर्दलिता सिता समशिता स्फीतं निपीतं पयः
स्वर्यातेन सुधाऽप्यधायि कतिधा रम्भाधरः खण्डितः।
तत्त्वं ब्रूहि मदीय जीव भवता भूयो भवे भ्राम्यता
कृष्णेत्यक्षरयोर्द्वयोर्मधुरिमोद्गारः क्वचिल्लक्षितः॥[४३]

इत्थं काव्यात् धर्मप्राप्तिः श्रीमन्नारायणचरणारविन्दस्तवादिना मोक्षप्राप्तिश्च तज्जन्यफलानुसन्धानात्। इत्थं मोक्षरूपस्यापवर्गस्य प्राप्तिः काव्यात्।

अपि च अपवर्गो न केवलं मोक्षः। फलप्राप्तिरप्यपवर्गः। पाणिनिना तथैव निर्दिष्टत्वात्—'अपवर्गे तृतीया'[२] इति सूत्रे। अपवर्गः फलप्राप्तिः, तत्र द्योत्ये तृतीया भवति। यथा—

**दिवसेन भवानयुद्ध नरप विधिसिद्धसाधुवादपरम्**[४४] एवं शकुन्तलां चक्षुर्विषयतामापाद्य तच्चेतसः समावर्जकं सौन्दर्यं च समीक्ष्य यदुक्तं दुष्यन्तेन—अये लब्धं नेत्रनिर्वाणम्[४५] इति। तत्र नेत्रस्य फलप्राप्तिरेव निर्वाणफलाभिधेय, इति।

इत्थं **साहित्येऽपवर्गः** इति विषयस्यानुशीलनेन निष्कर्षतया यत् प्रादुर्भवति तदनुसारं इदं वक्तुं शक्यते यत् साहित्यस्यापवर्गः काव्यानन्दः। काव्यानन्दे सहृदयानां हृदयसंवादिनां विभावादीनां परामर्शाद् या तन्मयावस्था जायते यस्यामवस्थायां वैयक्तिकाः सांसारिकद्वन्द्वाश्चातीता भवन्ति। तदाऽऽत्माविश्रान्तिपूर्वकं यो रसोबोधो भवति स ब्रह्मास्वादसहोदरः। ब्रह्मास्वादसहोदरभूतायां तस्यामवस्थायां व्यष्टिभावना समष्टिभावनामापद्यते, व्यष्टिहृदयं समष्टिहृदयं भवति, व्यष्टिसीमाः समष्टिसीमासु पर्यवसिता भवन्ति। तामेवावस्थां भरतो निजहृदयसंवादपदेन, अभिनवश्च वासनासंवादशब्देन, मम्मटश्चाऽलौकिकचमत्कारपदेन विश्वनाथश्च सत्वोद्रेकादखण्डस्वप्रकाशानन्दचिन्मयशब्देन 'पण्डितराजश्च' भग्नावरण-चिद्विशिष्टरत्यादिरूपेण वस्तुतो रत्याद्यवच्छिन्न-चिद्रूपेण व्याजहुः। काव्यानन्दे लौकिका ये रत्यादीनां कार्यकारणभूताः सन्ति त एव काव्ये विभावानुभावव्यभिचारिपदव्यपदेश्या भवन्ति। लोके तु इमे लौकिकाः पदार्थाः सन्ति परं काव्ये इमेऽलौकिका भवन्ति। एवञ्चालौकिक-विभावादिभिः स्वस्वरूपानन्दात्मविषयकं यदज्ञानावरणं तदपसार्यते। अपसारिते चावरणे स्वरूपानन्दः प्रकाशते, विभावादींश्च विषयीकरोति। अतः सर्वे आनन्दमया अनुभूयन्ते। तस्मिन् काले स्वपरादिभेदो न भवति। परिमितप्रमातृताऽपसरति। सर्वविधद्वन्द्वविनिर्मुक्त आनन्दोऽनुभूयते। परं विभावादिसंवलितत्वाद् ब्रह्मास्वादसहोदर इत्युच्यते।

---

*४२. ध्वन्यालोकः, तृतीयोद्योतः, पृ. 390*

*४३. काव्यप्रकाशः 4/44*

*४४. रसगङ्गाधरः, द्वितीयाननम्, ध्वनिनिरूपणम् पृ. 98*

*४५. अष्टाध्यायी 2/3/6*

*४६. काव्यप्रकाशः 4/105*

*४७. अभिज्ञानशाकुन्तलम्, प्रथमोऽङ्कः*

# ❁ अथर्ववेदीय-वैतानश्रौतसूत्र-परिचयः ❁

ऋषिराम रेग्मी
बलेवा, बाग्लुङ्ग

अथर्ववेदस्य सन्ति पञ्च कल्पसूत्राणि। तेषु वैतानसूत्रमिदं द्वितीयं कल्पसूत्रम्। तदुक्तं च

**नक्षत्रकल्पो वैतानस्तृतीयः संहिताविधिः। तुर्य आङ्गिरसः कल्पः शान्तिकल्पस्तु पञ्चमः॥** इति

एषु पञ्चकल्पेषु चत्वारः कल्पा मुख्यतो गृह्यकर्मावलम्ब्य प्रवृत्ताः सन्ति। द्वितीयं वैतानसूत्रमिदं श्रौतविषयानवबोधयति। यद्यपि कौशिकसूत्रेणापि संहिताया विनियोगो विधीयते, अतस्तस्यापरं नाम संहिताविधिरिति, तथापीदं गृह्यसूत्रं नैकान्ततः श्रौतविषयवलम्ब्य प्रवृत्तम्, तत्र गृह्यकर्मसम्बद्धा विषया एव बहवो वर्णिताः। अतोऽथर्ववेदस्य केवलं श्रौतविषयमेवावलम्ब्य प्रवृत्तमेकमेव सूत्रं वैतानश्रौतसूत्रमस्ति। श्रौतसूत्रमिदमन्येभ्यः श्रौतसूत्रेभ्यो भिन्नं प्रतीयते। यतो हि ऋगादि वेदानां श्रौतसूत्राणि न गृह्यसूत्रेष्वाश्रितानि, न च तत्र गृह्यसूत्रैः श्रौतकर्म विनियुज्यते। किन्त्वथर्ववेदस्य वैतानसूत्रेण कौशिकगृह्यसूत्रमाश्रीयते। तत्र प्रमाणानि च यथा—

१. कात्यायनश्रौतसूत्रादिषु प्रतिज्ञसूत्रे प्रयुक्तो-'ऽथ' शब्दः मन्त्रब्राह्मणयोः सापेक्षत्वद्योतनाय वेदाध्ययनानन्तर्यार्थे पठ्यते, किन्तु वैतानसूत्रस्य प्रतिज्ञासूत्रे प्रयुक्तोऽथशब्दः संहिताविधेः (कौशिकगृह्यसूत्रस्य) सापेक्षत्वद्योतनाय पठ्यते। यथा—

'अथ वितानस्य। ब्रह्मा कर्मणि ब्रह्मवेदविद् दक्षिणतो विधिवदुपविशति वाग्यतः' इति सूत्रस्य भाष्ये भाष्यकृता 'अथ' शब्दः संहिताविधिसापेक्षत्वद्योतनाय इति पठितम्।

२. तथा कौशिकगृह्यसूत्रस्य 'अथ विधिं वक्ष्याम' इति प्रतिज्ञासूत्रे प्रयुक्तोऽथशब्दः मन्त्रब्राह्मणयोः सापेक्षत्वद्योतनाय संहिताध्ययनानन्तर्यार्थे पठ्यते, किन्तु पारस्करगृह्यसूत्रादिषु 'अथातो गृह्यस्थालीपाकानां कर्म' इति प्रतिज्ञासूत्रे प्रयुक्तोऽथशब्दः श्रौतसूत्राणां सापेक्षत्त्वद्योतनाय श्रौतकर्मानन्तर्यार्थं पठ्यते।

एतेनाथर्ववेदस्य अन्यवेदाद् भिन्ना परम्परा प्रतीयते। ऋगादिवेदस्य गृह्यसूत्राणि श्रौतसूत्रमूलकानि सन्ति, न तु साक्षात् संहितामूलकानि। किन्त्वथर्ववेदस्य गृह्यसूत्रं साक्षात् संहितामूलकम्, श्रौतसूत्रं च गृह्यसूत्रमूलकम्, न तु साक्षात् संहितामूलकं वर्तते। एतत् प्रमाणं वैतानसूत्रस्य कैश्चित् सूत्रैः स्पष्टीक्रियते—

१. **'उक्तो ब्रह्मौदनः'** (२.१.४)

स्मार्तकल्पे विहितो ब्रह्मौदनोऽत्रापि भवति।

२. **'जीवाभिराचम्येत्यादि प्रपदनान्तम्'** (१.१.१९)

एतत्कर्म संहिताविधिवद् भवतीत्यर्थः।

३. **'अग्ने गृहपते' इति कौशिकसूत्रोक्तेन मन्त्रेण गार्हपत्यमुपतिष्ठते** (१.४.१९)।

४. **'यजमानो द्वादशरात्रमुपवत्स्यद् भक्तमित्युक्तम्'** (२.३.१२) संहिताविधावित्यर्थः।

एभिः प्रमाणैर्वैतानसूत्रस्य संहिताविधिसापेक्षत्वं सिध्यति।

वैतानसूत्रमिदं गोपथब्राह्मणमप्याश्रयति। यथोक्तं च—'ब्राह्मणोक्तमग्न्युपस्थानम्' (२.३.२५) इति। वैतानसूत्रस्य शुक्लयजुर्वेदीयकात्यायनश्रौतसूत्रेण सह दृढ़ः सम्बन्धो वर्तते। तथा कृष्णयजुर्वेदीयैः बौधायना-पस्तम्ब-मानव-भारद्वाजाख्यैः श्रौतसूत्रैः सहाप्यस्य सम्बन्धो वर्तते। यथा चोक्तम्—'देवताहविर्दक्षिणा यजुर्वेदात्' (१.१.९) इति।

एवञ्चाश्वलायन - लाट्यायनप्रभृतिभिः सहाप्यस्य कश्चित् सम्बन्धः प्रतीयते।

श्रौतसूत्राणामितिहासे इदं सूत्रं सर्वसूत्रग्रन्थेभ्य अर्वाक्भवं मन्यते। सर्वसूत्र ग्रन्थेभ्योलघुतमोऽयं सूत्रग्रन्थः। अस्मिन् ग्रन्थे दर्शपूर्णमासादिषु अयनान्तेषु त्रयीविहितकर्मसु ब्रह्मा, ब्राह्मणाच्छंसी, आग्नीध्रः, पोतेति चतुर्णाम् ऋत्विजां कर्म प्रतिपाद्यते। तेषु प्रधानकार्यं ब्रह्मा सम्पादयति। अन्यर्त्विजामभ्यनुज्ञाप्रदानम्, अनुमन्त्रणादिकं च ब्रह्मणः प्रधानं कार्यम्। शस्त्रपाठादीनि ब्राह्मणाच्छंसिनः कार्याणि। साम्ना स्तुताया देवतायाः पुनः सामरहितेन ऋङ्मन्त्रेण स्तवनं शस्त्रमित्युच्यते। तत्कार्यं ब्राह्मणाच्छंसी संपादयति। अन्वाहार्यपचनमाग्नीध्रस्य कार्यम्। प्रस्थितयाज्याप्रचारादिकं पोतुःकार्यम्।

ग्रन्थेऽस्मिन्नष्टाध्यायाः सन्ति। एकैकस्मिन् अध्याये बहुकण्डिका भवन्ति। अत्र प्रतिपादिता विषयाः संक्षेपेणाधः प्रस्तूयन्ते—

तत्र प्रथमेऽध्याये-परिभाषाप्रकरणम्, दर्शपूर्णमासौ, द्वितीये-अग्न्याधानम्, अग्निहोत्रम्, आग्रयणेष्टिः चातुर्मास्यानि, वैश्वदेव-वरुणप्रघास-साकमेध-शुनासीर्याख्यानि कर्माणि, पशुबन्धश्चेति पञ्च कर्माणि। तृतीयेन-चतुर्थाध्यायद्वितीयकण्डिकापर्यन्तभागेच अग्निष्टोमोक्थ्यषोडश्यतिरात्रात्मकः प्रकृतिभूतश्चतुः संस्थः सोमयागो वर्णितः। चतुर्थाध्यायस्य तृतीयकण्डिकायां वाजपेयाप्तोर्यामयोः वर्णनं कृतम्। पञ्चमे-अग्निचयनम्, सौत्रामणी, मैत्रावरुण्यामिक्षेष्टिश्चेति वर्णिताः। षष्ठे-गवामयनम्, सप्तमे-राजसूयः, अश्वमेधः, पुरुषमेधः, सर्वमेधश्चेति चत्वारो यागा वर्णिताः। एकाहस्तोत्रविकाराः, अहीनस्तोत्रविकाराः, काम्ययागाश्चेति विषया वर्णिताः।



# ❁ विशिष्टाद्वैतदर्शनम् ❁


**गोपालप्रसाद अधिकारी**

वेदान्ताध्यापकः

रामानुज दर्शन महाविद्यालय

त्रिपुराभैरवी, वाराणसी


वेदः कर्मकाण्ड-ज्ञानकाण्डभेदेन द्विधा विभज्यते। यत्र कर्मनिरूपणं प्रधानतया कृतं तस्य कर्मकाण्डनाम्ना व्यपदेशः। यत्र परमात्मनः निरूपणं प्राधान्येन अकारि तस्य ब्रह्मकाण्डनाम्ना व्यवहार इति विवेकः। ब्रह्मकाण्डस्यैव ज्ञानकाण्डः, वेदान्तः, उत्तरभाग इत्यादिर्व्यवहारोऽपि ग्रन्थेषु दृश्यते।

## वेदान्त-शब्दार्थ-विवेचनम्

वेदस्य अन्तिमभागे विद्यमानत्वादेव वेदान्त इत्युच्यते। अस्यैव उपनिषदिति नामान्तरमपि विद्यते। न च क्वचित् उपनिषद्भागः वेदस्य अन्ते न दृश्यते इति पूर्वोक्तवेदान्तशब्दव्युत्पत्तिकल्पनमनुचितमिति वाच्यम्, वेदार्थनिर्णयोपयोगित्वं वेदान्तशब्दस्य प्रवृत्तिनिमित्तमिति ब्रूमः। अस्यायमर्थः—सिद्धान्त इत्यत्र अन्तशब्दो निर्णयार्थवाची। तथैव अत्रापि स्वीकृत्य अन्तो निर्णयः संशयापगम इति वर्णनमादृत्य वेदार्थनिर्णयोपयोगित्वं वेदान्तशब्दार्थ इति। तच्च सर्वास्वपि उपनिषत्सु अप्रतिहतम्। किं च देवतोद्देशेन द्रव्यत्यागो याग इत्युच्यते। तत्र यागस्वरूपं पूर्वकाण्डे निरूपितम्। यागादिकर्मणां प्रधानं लक्ष्यं किमिति तु निर्णयो वेदान्तभागादेव जायते। अतो यदुपरि वेदनीयं किमपि नावशिष्यते, तद् वेदान्तेन वेद्यत इतिं वेदान्तशब्दार्थो निरूपितो भवति।

## उपनिषच्छब्दार्थ-निरूपणम्

उपनिषदिति कस्माद् उच्यते इति चेद् अत्र ब्रूमः—उप-समीपे-निषद्य उपविश्य, शिष्य आचार्यसमीपं गत्वा उपदेशरूपेण गृह्णाति इति अभिप्रायेण उपनिषदित्युच्यते। ब्रह्मणि उपनिनिषण्ण उपनिषदिति श्रुत[१]प्रकाशिकायामुक्तम्। अव्यवधानेन ब्रह्म समन्वेति इति तदर्थः। अनेन अद्वारकभगवत्प्रतिपादकत्वमुपनिषत्वमित्युक्तं भवति। अस्यायं भावः—वेदे पूर्वभागो न साक्षात् परमात्मानं प्रतिपादयति। अग्नये स्वाहा, इन्द्राय स्वाहा इत्यादिस्थलेषु अग्नीन्द्रादिशब्दा न साक्षात् परमात्मानं बोधयितुं क्षमन्ते। परं तु वेदान्तभागरूपोत्तरभागस्तु साक्षादेव परमात्मनो बुबोधयिषया प्रवृत्त इति विवेकः।

अथवा उपनिषच्छब्दो रहस्यार्थवाची। यथा बृहदारण्यके-(७-४-२) सत्यं ब्रह्म, इत्युपक्रम्य आदित्यमण्डले व्याहृतिशरीरत्वेन सत्यस्य ब्रह्मणः उपास्यत्वमुक्त्वा तस्योपनिषदहरित्यधिदैवतम् इत्युक्तम्। तथा अक्षिणि व्याहृतिशरीरत्वेन सत्यस्य ब्रह्मणः उपास्यत्वमुक्त्वा तस्योपनिषदहमित्यध्यात्मम् इति चोक्तम्। तत्र "द्वे उपनिषदौ रहस्यनामनी" इति श्रीभाष्यं प्रतिपादयति। अत उपनिषच्छब्दो रहस्यरूपमर्थं बोधयतीति सिद्धम्।

एवं वा विवेचनीयमेतत्—षद्लृ विशरणगत्यवसादनेषु इति विशरणाद्यर्थकोऽयं धातुः उप, नि इत्युपसर्गद्वयेन साकंनिश्शेषतापत्रयं विशदं ज्ञानं तत्सम्पादकत्वेन वेदभागं च वक्ति। अत उपनिषदिति जातम्। अयं पक्षः शांकरभाष्ये समाहृतः।

तदिदमुपनिषच्छास्त्रं व्याख्यातुमेव प्रवृत्तं ब्रह्ममीमांसादर्शनम्। तदर्थं भगवान् व्यासः शारीरकशास्त्रं सूत्ररूपेण प्रणिनाय। तद्व्याख्यातुकामा बहव आचार्या नानामतावलम्बिनो बभूवुः। अत एव द्वैताद्वैत-विशिष्टाद्वैतादीनां प्रादुर्भावोजातः।

**विशिष्टाद्वैतशब्दार्थः—**

विशिष्टाद्वैतं नाम विशिष्टैक्यमित्यर्थः। विशिष्टस्य अद्वैतमिति विग्रहो भवति। यथा लोके 'नीलो घटः' इत्यत्र विशेषण-विशेष्यविवेके भेदसत्त्वेऽपि विशिष्टं वस्तु एकमित्येव व्यवह्रियते न द्वे इति, तथैव ब्रह्मापि स्वभिन्ननानाचेतनाचेतनविशिष्टं सदपि एकमित्येव व्यवह्रियते न द्वे इति, न वा नानेति। तथा च द्वयोर्भावो द्विता-द्वितैव द्वैतम्, न द्वैतमद्वैतम्, विशिष्टस्याद्वैतं विशिष्टाद्वैतम्। विशिष्टस्याद्वैतमित्यत्र विशिष्टे द्वैतस्य पर्याप्ति सम्बन्धेन अभावो वर्तते। अतविशिष्टाभेद इत्यपि वक्तुं शक्यते। अत एव **"प्रकार-प्रकारिणोर्मिथोऽत्यन्त-भेदेऽपि विशिष्टैक्य विविक्षया एकत्वव्यपदेशः"** इति न्यायसिद्धाञ्जने श्रीमद्भिः कवितार्किकसिंहैः वेंकटनाथाचार्यैरभ्यधायि। विशिष्टश्च विशिष्टश्च विशिष्टे तयोरभेदः विशिष्टाद्वैतमित्यपि वक्तुं शक्यते। विशिष्टे द्वित्वाभावप्रतीतेः द्वितीयराहित्यरूपमैक्यमत्र वर्णनीयम्। तत्तु स्वसजातीयद्वितीयराहित्यम्। अत एव श्रीमद्यामुनमुनयः—यथा चोलनृपः सम्राडद्वितीयोऽस्ति भूतले। इति तत्तुल्यनृपति-निवारणपरं वचः। न तु तद्भृत्यतत्पुत्रकलत्रादिनिवारणम्।" इति अस्मिन्नर्थे निदर्शनमपि प्रादीदृशन्। तथा **"तत्त्वमसि"**-इत्यत्र तत्पदं जगत्कारणत्वादिविशिष्टं ब्रह्म बोधयति, त्वम्पदञ्च अभिमुखजीवविशेषविशिष्टं ब्रह्म बोधयति। तयोरभेदस्तु सिद्ध इत्यस्मिन्पक्षे न कोऽपि दोषः। एवं 'सर्वं खलु इदं ब्रह्म' इत्यत्रापि सर्वशब्दः चेतनाचेतनविशिष्टं ब्रह्मैव बोधयति। तस्य ब्रह्मणा सह अभेद इति न कोऽपि दोषः। अत एव श्रीमद्वेंकटनाथार्याः न्यायसिद्धाञ्जनस्य प्रतिज्ञावाक्यं "अशेषचिदचित्प्रकारं ब्रह्मैक्यमेव तत्त्वम्" इत्यवोचन्।

**अपि च नेदं दर्शनं नवीनम्, किंतु प्रचीनमिति ब्रूमः।**

**नमस्ते वेदविदुषे विशिष्टैक्यस्वरूपिणे। श्रीभूमिनीलाधिपतये जगत्पित्रे नमो नमः॥**
**इत्यादिस्तुतिभिः स्तुत्वा देवं वराहरूपिणम्। अर्चयामासुरात्मेशं गन्धपुष्पादिभिर्हरिम्।**

इति विशिष्टाद्वैतपरतया वराहं स्तुत्वां पार्वतीं प्रति भगवान् रुद्रः कथयतीति पाद्मोत्तरवचनेन अस्य प्राचीनत्वं सिद्धयति। अत एव श्रीमद्रामानुजचार्याः वेदाथ संग्रहे "भगवद्बोधायन-टङ्कद्र-मिणगुहदेव-कपर्दि-भारुचि-प्रभृत्य - विगीतशिष्टपरिगृहीतपुरातन-वेदवेदान्त-व्याख्यानसुव्यक्तार्थश्रुतिनिकरनिदर्शितोऽयं पन्थाः" इति, एवं श्रीभाष्ये—भगवद्बोधायनकृतां विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाचार्याः संचिक्षिपुः, तन्मतानुसारेण सूत्राक्षराणि व्याख्यास्यन्ते। इति च स्वसिद्धान्तस्य विशिष्टाद्वैतदर्शनस्य प्राचीनत्वं शिष्टपरिगृहीतत्वं सुस्पष्टमूचुः।

किं च प्राचीननवीनभावौ नादरानादरप्रयोजकौ भवितुमर्हतः। तदुक्तं संकल्पसूर्योदये यादवाभ्युदये च—
**'तदात्वे नूतनं सर्वमायत्यां च पुरातनम्। न दोषायैतदुभयं न गुणाय च कल्पते॥**

इति अतो यद्दर्शनमर्थादनपेतं परः शतपरि- क्षोदोत्तरमपि उपलभ्भानुसारि युक्तियुक्तं बाधप्रतिरोधरहितं च सिद्धयति, तत् प्राचीनं नवीनं वा अस्तु आदरणार्हमेव।

**साम्प्रतं विशिष्टाद्वैतमते प्रधानतया स्वीकृतान् अर्थविशेषान् काञ्चनाधिकृत्य ब्रूमः—**

**जगद्-ब्रह्मणोः शरीरात्मभावः —**

**तत्त्वं जिज्ञासमानानां हेतुभिर्विश्वतो मुखैः।**
**तत्त्वमेको महायोगी हरिर्नारायणः परः॥**

इति महाभारतवचनम्। तच्च तत्त्वं ब्रह्म, सर्वदा समस्तचेतनाचेतनविशिष्टं वर्तते। चेतनाचेतनपदार्थास्सर्वे तस्य विशेषणानि। तच्च एषां विशेष्यम्, अपृथक्सिद्धिस्तयोस्सम्बन्धः। यावत्सत्तमसम्बन्धानर्हत्वमपृथक्सिद्धिः। चेतनाचेतन-



पदार्थाः यावत्सत्तं परब्रह्मणा सम्बद्धचैव वर्तन्ते, कदापि असंबध्य वर्तितुं नार्हन्ति। परमात्मापि यावत्सत्तं चेतनाचेतनैः सम्बद्धचैव वर्तते, कदापि असंबध्य वर्तितुं नोत्सहते। इत्थं परब्रह्मणः चेतनाचेतनानाञ्च गाढः सम्बन्धः। चेतनाचेतनानां परमात्मना सह विद्यमानं पृथक्सिद्धत्वमेव शरीरात्मभाव इति व्यवह्रियते। अर्थात् चेतनाचेतनपदार्थाः विशेष्यस्य परमात्मनः शरीराणि, परमात्मा च चेतनाचेतनानामन्तरात्मा। ईश्वरः चेतनाचेतनद्रव्याणां नियमेन धारको नियन्ता शेषी च वर्तते। अत एव सर्वस्य शरीरी अन्तरात्मेति कथ्यते। चेतनाचेतनद्रव्याणि नियमेन परमात्मना धार्याणि नियम्यानि तस्य शेषभूतानि च वर्तन्ते। अत एव अन्तर्यामि ब्राह्मणे **''यः पृथिव्यां तिष्ठन् यः पृथिव्या अन्तरोमं पृथिवी न वेद, यस्य पृथिवी शरीरं''** योऽप्सु तिष्ठन्०,.........यस्यापः शरीरम्०,.........य आत्मनि तिष्ठन्०.........यस्यात्मा शरीरम्'' इत्यादिषु सर्वत्र प्रतिवस्तु निर्दिश्य सर्ववस्तूनामपि चेतनाचेतनानां ब्रह्मशरीरत्वं प्रतिपादितमस्ति। अत्र प्रतिपर्यायं शरीरं शरीरमिति निर्देशात् सर्ववस्तूनां ब्रह्मशरीरत्वबोधने श्रुतीनामादरातिशयोऽपि सूचितो भवति। 'यदम्बु वैष्णवः कायः, तत्सर्वं वै हरेस्तनुः' जगत् सर्वं शरीरं ते,''सरित् समुद्राश्च हरेः शरीरं यत्किञ्चभूतं प्रणमेदनन्यः, इत्यादीनि पुराणेतिहासवचनान्यपि अत्र प्रमाणम्।

**शरीरात्मभावे दर्शनान्तर-संवादः**

परमाणूनां परमात्मशरीरत्वं नैयायिकैरङ्गीकृतम्। तदाह न्यायकुसुमाञ्जलौ पञ्चमस्तवके उदयनाचार्यः

''साक्षादधिष्ठातरि साध्ये परमाण्वादीनां शरीरत्वप्रसंग इति किमिदं शरीरत्वं यत् प्रसज्यते। यदि साक्षात्प्रयत्नवधिष्ठेयत्वं तदिष्यत एव। न हि ततोऽन्यत् प्रसज्यकमपि'' इति।

पातञ्जला अपि ईश्वरस्य शरीरमिच्छन्तीत्ययमेव ग्रन्थारम्भे सूचयति-''क्लेशकर्मविपाकाशयैरपरामृष्टो निर्माणकायमधिष्ठाय सम्प्रदायप्रद्योतकोऽनुग्राहकश्चेति पातञ्जलाः'' इति। शरीरैकनिष्पाद्यवेदादिनिर्माणार्थं कायो निर्माण-कायः॥ इति प्रकाशकारः व्याख्याति।

एवमन्ते निरूपयत्युदयनः स्वसिद्धान्तमतं ''ननु व्यवहारयितृवृद्धः शरीरी समधिगतः। न चेश्वरस्तथा। तत् कथमेवं स्यात्। न शरीरान्वयव्यतिरे कानुविधायिनि कार्ये तस्यापि तद्भावात्। गृह्णाति हि ईश्वरोऽपि कार्यवशात् शरीरमन्तराऽन्तरा। दर्शयति च विविधां विभूतिम्'' इति।

एवं धृतिरूपहेतूपपादनावसरे पञ्चमस्तबके न्यायकुसुमाञ्जलौ आचार्योदयनः ''इन्द्राग्नि-यमादिलोकपालवाचकशब्दानां तदाविष्टपरमात्मपर-त्वमभिसन्धाय'' सर्वावेशनिबन्धश्च सर्वतादात्म्य- व्यवहारः, आत्मैवेदं सर्वम् '' इत्यवोचत्।

एवं न्यायसुधायां मीमांसकमूर्धन्येन भट्टसोमेश्वरेण शरीरं चेत् अनित्यमिति न व्याप्तिः, नित्यव्योमवेदादेरपि शरीरत्वस्य शास्त्रीयत्वात्। तेषां देहत्वं च वार्तिकोक्तं सम्भोगहेतुत्वम्। तच्च नियमनलक्षणभोगाधिष्ठानत्वम् इति घंटकश्रुतीः प्रदर्श्य शरीरात्मभावसिद्धान्तः परिपोषितः।

एवं ''देवदत्तो गच्छति यज्ञदत्तो गच्छतीत्युपचारात् शरीरे प्रत्ययः'' इति सूत्र प्रणेत्रा कणादमहर्षिणा देवदत्तपदस्य शरीरविशिष्टात्मवाचिनः देवदत्तो गच्छतीत्यादौ देहमात्रपरतया प्रयोग औपचारिक एवेति स्पष्टमवोचि। ''चराचरव्यपाश्रयस्तु'' इत्येतस्मिन् सूत्रे बादरायणेन शरीरवाचक-शब्दानां शरीरविशिष्ट-वाचित्वं मुख्यं, विशेषणमात्रे प्रयोगो भाक्त इति स्फुटं प्रतिपाद्यते।

एवं ब्रह्मसूत्रेषु बहुत्र शरीरात्मोभावे निरूपितो वर्तते। यथा "अंशो नानाव्यपदेशात्" इत्यत्र अंशत्वं शरीरात्मभावरूपमित्यवधेयम्। एवं "अपि तौ तद्वत्प्रसङ्गादसमञ्जसं न तु दृष्टान्तभावात्" इत्यत्रापि शरीरात्मभावः निरूपितः।

**शरीरलक्षणानि एवमत्रानुसन्धेयानि—**

१. यस्य चेतनस्य यदवस्थं द्रव्यं यावत्सत्तमसम्बन्धानर्हं स्वशक्यनियन्तव्यस्वभावं तदवस्थं तस्य शरीरमिति।

२. यस्य चेतनस्य यदवस्थं द्रव्यं यावत्सत्तं धार्यं तदवस्थं तस्य शरीरम्।

३. यस्य चेतनस्य यदवस्थं द्रव्यं यावत्सत्त्वमशेषतानर्हं तदवस्थं तस्य शरीरमिति।

एभिः त्रिभिर्लक्षणैरिदं चतुर्थमपि फलितं भवति।

४. यस्य चेतनस्य यदवस्थं द्रव्यमपृथक्सिद्धविशेषणं तत् तस्य शरीरमिति।

**तत्त्वत्रयनिरूपणम्**

"भोक्ता भोग्यं प्रेरितारं च मत्वा" इति। "प्रधानक्षेत्रज्ञपतिर्गुणेशः" इत्यादि।

श्रुतिवाक्यपुरस्सरं ईश्वरः, जीवः, अचेतनमिति तत्त्वत्रयं विशिष्टाद्वैतिनः स्वीकुर्वन्ति। तत्त्वत्रयस्यास्य विभज्य ज्ञाने सत्येव अमृतत्वप्राप्तिः इत्यपि ता एव श्रुतयो निरूपयन्ति "पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्ते नामृतत्वमेति" इत्याद्याः श्रुतयोऽपि। एवं तत्वत्रयविभाग -करणात् तत्त्वानां परस्परसांकर्यमनुपपन्नं भवतीति निश्चप्रचम्।

तथा च "अचेतना परार्था च नित्या सतत विक्रिया। त्रिगुणा कर्मिणां क्षेत्रं प्रकृतेः रूपमुच्यते" इति प्रकृतेर्लक्षणमुच्यते। अणुत्वे सति चेतनत्वं, स्वतः शेषत्वे सति चेतनत्वं वा जीवलक्षणम्। विभुत्वे सति चेतनत्वं परमात्मनः लक्षणम्। अत लक्षणतः प्रतिपन्नानां त्रयाणां वस्तनां परस्परं भिन्नत्वात् एतेषामैक्यं न प्रदर्शयितुं शक्यते।

**"अर्थपञ्चकम्"**

**प्राप्यस्य ब्रह्मणो रूपं प्राप्तुश्च प्रत्यगात्मनः। प्राप्त्युपायं फलं चैव तथा प्राप्तिविरोधि च॥**
**वदन्ति सकलावेदाः सेतिहासपुराणकाः॥**

इति सर्ववेदेतिहासपुराणानामपि पर्यवसानभूमिः अर्थपञ्चकमेव। एतत् पञ्चकमनुसन्दधत एव मोक्षेच्छा तदुपायादिप्रवृत्तिरिति सर्वसम्मतम्।

एवं ब्रह्मणः सगुणत्वम्। जीव-ब्रह्मणोः शेषशेषिभावः इत्यादयोऽपि प्रधानप्रतितन्त्रसिद्धान्ता वर्तन्ते। तथापि विस्तरभीत्या ऽतो विरम्यते।



# ❋ तीन दुर्लभ वस्तुहरू ❋

**स्वामी आत्मानन्द गिरि**
गलेश्वर आश्रम, देवघाट धाम

भगवान् शंकराचार्यले संसारमा तीन वस्तुलाई दुर्लभ बताउनु भएकोछ।

**दुर्लभं त्रयमेवैतत् देवानुग्रहहेतुकम्।**
**मनुष्यत्वं मुमुक्षुत्वं महापुरुषसंश्रयः॥**

यो संसारमा तीन वस्तु दुर्लभ छन्-मनुष्यत्व, मुमुक्षुत्व र महापुरुषसंश्रय। तर यी तीन वस्तु पनि भगवदनुग्रहले सुलभ हुन सक्दछन्।

**मनुष्यत्व दुर्लभ छ :-** मनुष्यको शरीर ईश्वर अनुग्रहले प्राप्त हुन्छ। संसारका सम्पूर्ण प्राणीहरूको संख्याका अनुपातमा मनुष्यहरू नगण्य नै छन्। त्यसलै पनि मनुष्य जीवनको दुर्लभता सिद्ध हुन्छ। परन्तु यस विषयमा अरु पनि अनेक हेतु छन्।

मनुष्य शब्दको अर्थ हुन्छ 'मनुमहाराजको सन्तान'। मनुकी धर्मपत्नीको नाम थियो श्रद्धा। मनुको अर्थ हुन्छ 'मनन' अतः जो मनन र श्रद्धा दुवैलाई लिएर सृष्टिमा आउँछ त्यसलाई मनुष्य मानिन्छ।

मनुष्यको अर्को अर्थ हुन्छ 'मनः शक्ति' अर्थात् जो मनसंग सम्बन्ध जोड्दछ त्यसलाई मनुष्य मानिन्छ। त्यसैले मनुष्यले कार्य र कारणलाई देखेर अधिष्ठानको चिन्तन गरी दुबैमा विद्यमान एक ब्रह्मतत्वलाई जान्न सक्दछ।

सृष्टिमा चार प्रकारका प्राणीहरू छन्:- उद्भिज्ज, स्वेदज, अण्डज र जरायुज।

**उद्भिजः-** जो पृथ्वीलाई फोरेर निस्किन्छ त्यसलाई उद्भिज्ज भनिन्छ, जस्तैः- वृक्ष, लता आदि। यिनमा चेतनाको एक कला हुन्छ र यही एक कलाले उनीहरूको जीवन चल्दछ।

**स्वेदजः-** पसिनाबाट (स्वेदबाट) उत्पन्न हुनेलाई स्वेदज भनिन्छ, जस्तै—जुम्रा, उडुस, उपियाँ आदि। यिनीहरूमा चेतनाको दुई कला रहन्छ। आफ्नो सम्पूर्ण जीवन यिनै दुई कलाद्वारा नै निर्वाह गर्दछन्।

**अण्डजः-** जो अण्डाबाट उत्पन्न हुन्छन् तिनलाई अण्डज भनिन्छ। जस्त-पक्षी, माछा, सर्प आदि। यी प्राणीहरूमा चेतनाको तीनकला रहन्छ।

**जरायुजः-** जो साल नालमा बाँधिएर जन्मन्छ त्यसलाई जरायुज भनिन्छ, जस्तै—मनुष्य, गाई, भैंसी, बाख्रा आदि। यी मध्ये पशुमा चेतनाको चारकला र मनुष्यमा पाँचकला विकसित हुन्छन्। मनुष्यमा पनि सत्पुरुषहरूमा छ कला र जीवनमुक्त पुरुषहरूमा सातकला विकसित हुन्छन्। जीवनमुक्त पुरुषहरूमा पनि जसमा ८, ९ वा १० कला विकसित हुन्छन्, यी पुरुषहरूलाई अवतारी पुरुष भनिन्छ।

जहाँसम्म हुन सक्दछ, प्राणीहरूको काम त एक, दुई, तीन, अथवा चार कलाद्वारा पनि निर्वाह चल्न सक्दछ। परन्तु मनुष्यत्वको सिद्धि त पाँच अथवा त्यसभन्दा पनि अधिक कलाको विकास नभई हुँदैन।

परब्रह्म परमात्मामा तीनभाव मानिएको छ-सद्भाव, चिद्भाव र आनन्दभाव। मनुष्यमा यी ३ भावको विकास भएपछि पाँच या अधिक कलाको विकास भएको मानिन्छ। यो विकास केवल मनुष्यमा मात्र सम्भव छ। अतः मनुष्यत्व दुर्लभ छ।

